**मातामही (नानी) :--**

ॐ अद्यामुकगोत्र अस्मन्मातामही अमुकी देवी गङ्गारूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ३।

**प्रमातामही (परनानी) :--**

ॐ अद्यामुकगोत्रा अस्मत्प्रमातामही अमुकी देवी यमुनारूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ३।

**वृद्धप्रमातामही (बूढ़ी परनानी) :--**

ॐ अद्यामुकगोत्रा अस्मत्वृद्धप्रमातामही अमुकी देवी सरस्वतीरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ३।

(इसके वाद ताऊ, चाचा, भाई, पुत्र, श्वशुर, मामा, फूफा, वूआ, पत्नी, वहन, पुत्री,. गुरु, सौतेली माँ, शिष्य, मित्र आदि को नाम एवं गोत्र का उच्चारण कर तीन-तीन अञ्जलि दें ।)

अस्मत्पत्नी, अस्मत्कन्या, अस्मत्पितृव्यं, अस्मद्भ्राता, सापत्नभ्राता, पितृभगिनी, (वुआ) मातृभगिनी (मौसी) अस्मद्भगिनी (वहन) श्वशुरः अस्मद्गुरुः, अस्मत्सखा इत्यादि ।

(पूर्वाभिमुख होकर सव्य (यज्ञोपवीत एवं गमछे को वाएँ कन्धे पर रखकर) हो नीचे लिखे मंत्रों से देवतीर्थ द्वारा जलधारा छोड़ें ।)

ॐ देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः क्रूष्माण्डास्तरवः खगाः ।।
जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः ।
तृप्तिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः ।।

(कक्षिणाभिमुख हो जनेऊ और गमछे को दाहिने कन्धे पर रखकर (अपसव्य हो) पितृतीर्थ से नीचे लिखे मंत्रों द्वारा जलधारा छोड़ें ।)

ॐ नरकेपु समस्तेपु यातनासु च ये स्थिताः ।
तेपामाप्यायनायैतद्दीयते सलिलं मया ।।
येऽबान्धवा वान्धवाश्च येऽन्यजन्मनि वान्धवाः ।
ते सर्वे तृप्तिमायान्तु मया दत्तेन वारिणा ।।

ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ।।
आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ।।
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाँल्लोकादिदमस्तु तिलोदकम् ।।

(गमछे को चार तह करके उसमें तिल तथा जल रखकर नीचे लिखे मंत्र द्वारा जमीन पर अपनी बाँयी ओर निचोड़ दें ।)

ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ।।

(नीचे लिखे मंत्र द्वारा भीष्मपितामह को एक अञ्जलि जल दें ।)

भीष्म शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
अभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ।।

(पूर्वाभिमुख एवं सव्य होकर प्रत्येक मंत्र से एक-एक अञ्जलि जल दें ।)

ॐ ब्रह्मणे नमः । ॐ विष्णवे नमः । ॐ रुद्राय नमः । ॐ सूर्याय नमः । ॐ दिग्भ्यो नमः । ॐ दिग्देवताभ्यो नमः । ॐ अग्नये नमः । ॐ पृथिव्यै नमः । ॐ ओषधिभ्यो नमः । ॐ वाचे नमः । ॐ वाचस्पतये नमः । ॐ मित्राय नमः । ॐ महद्भ्यो नमः । ॐ अद्भ्यो नमः । ॐ अपांपतये नमः । ॐ वरुणाय नमः ।

(नीचे लिखे मंत्र से सुर्यनारायण को सव्य हो अर्घ्य दें तथा जल को नेत्रों में लगावें ।)

**मंत्र :--**

ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णु तेजसे ।
जगत्सवित्रे शुचये नमस्ते कर्म दायिने ।।

**विसर्जन-मंत्र :--**

ॐ देवा गातु विदो गातुं वित्त्वा गातुमित ।
मनसस्पत इमं देवज्ञ ७ स्वाहा वातेधा ।।

अनेन यथाशक्ति देवर्षिमनुष्यपितृतर्पणाख्येन कर्मणा मम समस्तपितृस्वरूपी भगवान् जनार्दनवासुदेवः प्रीयतां न मम ।

# देवपूजन में कुछ विचारणीय तथ्य

१. देवपूजन में पुष्प अधोमुख कर न चढ़ायें । वे जैसे उत्पन्न होते हैं वैसे ही चढ़ायें । विल्वपत्र को उल्टा करके (अधोमुख) चढ़ायें तथा कुशा के अग्रभाग से देवताओं पर जल छिड़कें ।

२. धोती में रखा हुआ और जल में डुबाया हुआ पुष्प देवगण ग्रहण नहीं करते हैं ।

३. भगवान् शंकर को कुन्द, श्रीविष्णु को धतूरा, देवी को आक तथा मदार और सूर्य को तगर का पुष्प नहीं चढ़ाना चाहिए ।

४. श्री विष्णु को चावल, गणेश को तुलसी, दुर्गा को दूर्वा और सूर्य को विल्वपत्र न चढ़ायें ।

५. देवताओं के प्रीत्यर्थ प्रज्वलित दीपक को बुझाना नहीं चाहिए ।

६. हाथ में धारण किये गये पुष्प ताम्रपत्र में रखा गया चन्दन और चर्मपात्र में रखा गया गंगा जल अपवित्र हो जाता है ।

७. दीपक को दीपक से जलाने पर मनुष्य दरिद्र और रोगी होता है ।

८. एक हाथ से प्रणाम करने तथा एक प्रदक्षिणा करने से पुण्य नष्ट होता है । केवल चण्डी और विनायक की एक ही प्रदक्षिणा का साधारण विधान मिलता है ।

९. मांगलिक कार्यों में दूसरे की पहनी हुई अंगूठी धारण नहीं करनी चाहिए ।

१०. सभी पूजाकर्मों में पत्नी को दक्षिण (दाहिने) में बैठाने का विधान है किन्तु अभिषेक और विप्रपादप्रक्षालन तथा सिन्दूर-दान के समय वाम भाग में अर्धांगिनी के बैठने का विधान शास्त्र सम्मत है ।

११. स्त्री आचमन के स्थान पर जल से नेत्रों को पोंछ लें ।

१२. स्त्रियों के बायें हाथ में ही रक्षा सूत्र बाँधने का शास्त्रीय विधान है ।

१३. यज्ञ के अन्त में पान-सुपारी अक्षत आदि सहित घृत से भरे हुए नारियल की गड़ी को पीले वस्त्र में लपेट कर रक्षासूत्र एवं माला आदि से वेष्ठित कर पञ्चोपचार से पूजन कर पूर्णाहुति दें । किन्तु वैवाहिक होम में और घर के भीतर नित्य होम में पूर्णाहुति न दें ।

१४. शनिवार, मंगलवार, बुधवार एवं शुक्रवार को लक्ष्मी की पूजा प्रारम्भ न करें ।

१५. स्कन्द पुराण के अनुसार लक्ष्मी प्राप्ति के लिए पौष शुक्ल दशमी, चैत्रशुक्ल पञ्चमी तथा श्रावण की पूर्णिमा को लक्ष्मी का अनुष्ठान एवं पूजन करने से अभीष्ट की उपलब्धि होती है ।

।। श्री गणेशाय नमः ।।

अगजाननपद्मार्क गजाननमहर्निशम् ।

अनेकदन्तं भक्तानामेकदन्तमुपास्महे ।।

पूजनकर्त्ता सपत्नीक प्रातःकाल मंगलस्नान करके नवीन या गृह-प्रक्षालित शुद्ध वस्त्र उपवस्त्र धारण कर शुद्ध स्थान में आसन पर पूर्वाभिमुख होकर बैठकर तीन बार आचमन करें ।

**ॐ केशवाय नमः, ॐ माधवाय नमः, ॐ नारायणायनमः ।**

ऐसा बोलकर तीन बार आचमन करें । इसके बाद ॐ हृषीकेशाय नमः ऐसा उच्चारण कर हाथ धोलें । इसके बाद 'प्राणायाम' करें ।

**पवित्रधारणम् :--**

**मन्त्र :--** ॐ पवित्रेस्त्थो वैष्णव्यौसवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेणसुर्यस्यरश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पूनेतच्छकेयम् ।।

यथा वज्रं सुरेन्द्रस्य यथा चक्रं हरेस्तथा ।

त्रिशूलं च त्रिनेत्रस्य तथा मम पवित्रकम् ।।

इस मंत्र से दाहिने हाथ की अनामिका के मूल में पवित्री धारण करें ।

## मंगलतिलकम्

मन्त्रः -- ॐ स्वस्ति नऽइन्द्रो व्यृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।

स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिः स्वस्तिं नो बृहस्पतिर्दधातु ।।

स्वस्तिस्तु या विनाशाख्या धर्मकल्याण वृद्धिदा ।

विनायकप्रिया नित्यं ताञ्च स्वस्तिं ब्रुवन्तुनः ।।

(इस मन्त्र से त्रिपुण्ड अथवा ऊर्ध्वपुण्ड तिलक करें ।)

**कर्मपात्रपूजनम् :--**

अपनी बायीं तरफ भूमि पर त्रिकोणात्मक या चतुष्कोणात्मक मण्डप बनाकर गन्धाक्षत से पूजन कर उस पर कर्मपात्र रखकर --

मन्त्रः -- ॐ शं नो देवीरभीष्टय आपो भवन्तु पीतये ।

शँय्योरभि स्त्रवन्तु नः । (इस मंत्र से कलश में जल डालकर)

गंगे च यमुने चैव गोदावरी सरस्वति ।

कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु ।।

इस तरह अंकुश मुद्रा से तीर्थों का आवाहन कर, लेलिहान मुद्रा से अवगुण्ठन कर, मत्स्य मुद्रा से उसे आच्छादित कर पञ्च प्रणव का जप करें । इसके बाद गन्धाक्षतपुष्प लेकर वरुण का आवाहन करें ।

**मन्त्र :--**

ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह वोध्युरुश ७ समान ऽआयुः प्रमोषीः ।

गंगे च यमुने चैव गोदावरि सरस्वति ।
कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरू ।।
भगवन् वरुणागच्छ त्वमस्मिन् कलशे प्रभो ।
कुर्वेऽत्रैव प्रतिष्ठां ते जलानां शुद्धिहेतवे ।।

ॐ भूर्भुवः स्वः अस्मिन् कलशे वरुणं साङ्ग सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि । ॐ अपां पतये वरुणाय नमः । सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । नमस्करोमि । अङ्कुशमुद्रया तीर्थान्यावाह्य । वेनुमुद्रया अमृतीकृत्य । हूँ इति कवचेन मत्स्यमुद्रयाऽऽच्छाद्य । वं वरुणाय नमः । इत्यनेनाष्टवारमभिमन्त्र्य । (कलश का थोड़ा जल लेकर पूजन-सामग्री भूमि एवं अपने ऊपर उस जल से संप्रोक्षण करें ।)

**मन्त्र :--**

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ।।

**भूतापसारणम् :--**

पीली सरसों अथवा अक्षत लेकर पूजन-कर्मभूमि में चारों तरफ मन्त्र पढ़ते हुए फेंककर भूतापसारण करें ।

**मन्त्र :--**

अपसर्पन्तु ते भूता ये भूता भूमि-संस्थिता ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ।।
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।
सर्वेषामवरोधेन पूजाकर्म समारभे ।।

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः ।
स्थानं त्यक्त्वा तुत्सर्व यत्रस्थं तत्र गच्छतु ।।
भूतप्रेतपिशाद्या अपक्रामन्तु राक्षसाः ।
स्थानदस्माद्व्रजन्त्यन्यत्स्वीकरोमि भुवं त्विमाम् ।।
भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ।
ते सर्वेऽप्यपगच्छन्तु देवपूजां करोम्यहम् ।।

तीन बार ताली वजाकर सभी विपयों का आसारण करें ।

## आधारशक्तिपूजनम् :--

आसन के नीचे कुङ्कुम से त्रिकोण रेखा बनाकर पृथ्वी की पूजा करें--

**मन्त्रः** --

ॐ मही द्यौः पृथिवी च न ऽइमं यज्ञमिमिक्षताम् । पिपृतान्नो भरीमभिः ।

भूमि का स्पर्श कर गन्धाक्षतपुष्पों द्वारा पूजन करें ।

ॐ आधारशक्तये पृथिव्यै नमः, कमलासनाय नमः ।

**प्रार्थना** :-- पृथ्वि त्वया धृतालोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।

## दीपस्थानम् :--

कलश के दाहिने भाग में दीपक के लिए अक्षत आदि से आसन बनाकर, उस पर दीपक जलाकर गन्ध, अक्षत, पुष्पादि से उसकी पूजाकर हाथों में पुष्प लेकर प्रार्थना करें ।

**मन्त्रः** --

ॐ अग्निज्ज्योतिषाज्ज्योतिष्मानृक्मोवर्च्चसाव्वर्च्चस्वान् । सहस्रदाऽअसिसहस्रायत्त्वा ।

भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ।
यावत्कर्मसमाप्तिः स्यात्तावदत्र स्थिरो भव ।।

ॐ भूर्भुवः स्वः दीप देवतायै नमः आवाहयामि सर्वोपचारर्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ।

## स्वस्तिवाचनम् :--

ॐ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ।।१।। स्वस्तये

वायुमुपब्रवामहे सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तय स्वस्तय आदित्यासो भवन्तु नः ॥२॥ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वहंस ॥३॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो आदिते कृधि ॥४॥ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददताऽघ्नता जानता सङ्गमेमहि ॥५॥ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ॥६॥ अंहोमुचमाङ्गिरसं गयञ्च स्वस्त्या त्रेयम्मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयन्नो अस्तु ॥७॥

ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरीतास ऽउद्भिदः । देवा नो यथा सदमिद् वृधे ऽअसन्नप्रायुवो रक्षितारो दिवे दिवे ॥१॥ देवानां भद्रा सुमतिर्ऋजूयतान्देवाना ᳖ रातिरभिनो निवर्त्तताम् ।

देवानां ᳖ सख्यमुपसेदिमा व्वयन्देवा नऽआयुः प्रतिरन्तु जीवसे ॥२॥ तान्पूर्वया निविदा हूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् । अर्य्यमणं व्वरुण ᳖ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥३॥ तन्नो व्वातो मयोभु व्वातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः । तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना श्रृणुतन्धिष्ण्या युवम् ॥४॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे व्वयम् । पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ॥५॥ स्वस्ति नऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥६॥ पृषदश्वा मरुतः पृश्निमातरः शुभँय्यावानो व्विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो व्विश्वे नो देवाऽअवसा गमन्निह ॥७॥ भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा ᳖ सस्तनूभिर्व्यशेमहि देवहितँय्यदायुः ॥८॥ शतमिन्नु शरदो ऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥९॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । व्विश्वे देवाऽअदितिः पञ्चजना अदितिर्जातमदितिर्जनित्त्वम् ॥ द्यौः शान्तिरन्तरिक्ष ᳖ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः

व्वनस्प्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्मशान्तिः सर्व ॐ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥११॥ यतोयतः समीहसेततोनोऽ- अभयङ्कुरु । शन्नः कुरुप्रजाभ्योऽभयन्नः पशुभ्यः ॥१२॥ शान्तिः शान्तिः सुशान्तिर्भवतु ।

**माङ्गलिक देवस्मरणम् :--**

(हाथ जोड़कर देवताओं का स्मरण करें ।)

ॐ श्रीमन्महागणाधिपतये नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । वाणीहिरण्यगर्भाभ्यां नमः । श्रीलक्ष्मीनारायणाभ्यां नम । उमामहेश्वराभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलेभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः । एतत् कर्मप्रधानदेवताभ्यो नमः ।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥
धुम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छुणुयादपि ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
सङ्ग्रामे संकटे चैय विघ्नस्तस्य न जायते ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्व विघ्नोपशान्तये ॥
अभीप्सितार्थ सिद्ध्यर्थ पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै श्री गणाधिपतये नमः ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येपां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते ! तेऽङ्घ्रियुगं स्मरामि ॥

लाभस्तेपां जयस्तेषां कुतस्तेपां पराजयः ।
येपामिन्दीवरश्यामो हृदयस्थो जनार्दन ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥
सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।
सरस्वती प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥

(हाथ में लिए हुए अक्षत पुष्पादि को श्री गणेश जी के समीप रख दें ।)

**संकल्पः --**

दाहिने हाथ में चावल, सुपारी, पुष्प, चन्दन द्रव्य एवं जल लेकर संकल्प करें ।

ॐ विष्णुर्विष्णुर्विष्णुः । श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे जम्बूद्वीपे भरतखण्डे आर्यावर्तान्तर्गतब्रह्मावर्तस्य अमुकक्षेत्रे अमुक देशे अमुकनाम्निनगरे (ग्रामे वा) श्रीगङ्गायमुनयोरमुकदिग्भागे देवब्राह्मणानां सन्निधौ श्रीमन्नृपतिवीरविक्रमादित्यसमयतोऽमुकसंख्यापरिमितो प्रवर्त्तमान-संवत्सरे प्रभवादिषष्ठिसंवत्सराणां मध्ये अमुकनामसंवत्सरे, अमुकायने, अमुकगोले, अमुकऋतौ, अमुकमासे, अमुकपक्षे, अमुकतिथौ, अमुकवासरे, अमुकनक्षत्रे, अमुकयोगे, अमुककरणे, अमुकराशिस्थिते चन्द्रे, अमुकराशिस्थितेश्रीसूर्ये, अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोत्पन्नस्य अमुकशर्मणः (वर्मणः गुप्तस्य दासस्य वा) सपरिवारस्य ममात्मनः श्रुतिस्मृतिपुराणोक्तपुण्यफलावाप्त्यर्थ मम ऐश्वर्याभिवृद्धयर्थम् अप्राप्तलक्ष्मी-प्राप्त्यर्थ प्राप्तलक्ष्म्यश्चिरकालसंरक्षणार्थ सकलमनईप्सितकामनासंसिद्ध्यर्थ लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादिप्राप्त्यर्थं समस्तभयव्याधिजरापीडामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याद्यभिवृद्ध्यर्थ तथा च मम जन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमद्वादशस्थानस्थिताः क्रूरग्रहाः तैः सूचितं सूचयिष्यमाणञ्च यत्सर्वारिष्टं तद्विनाशद्वारा सर्वदा तृतीयैकादशस्थानस्थितवच्छुभफलप्राप्त्यर्थं पुत्रपौत्रादिसन्ततेरविच्छिन्नवृद्ध्यर्थम्

आदित्यादिनवग्रहानुकूलतासिद्ध्यर्थम् इन्द्रादिदशदिक्पालप्रसन्नतासिद्ध्यर्थम् आधिदैविकाधिभौतिकाध्यात्मिकत्रिविधतापोपशमनार्थं धर्मार्थकाममोक्षफलावाप्त्यर्थं यथा-ज्ञानं यथामिलितोपचारद्रव्यैः अमुक देवस्य पूजनं करिष्ये । तदङ्गत्वेन गणपत्यादि देवानां पूजनञ्च करिष्ये । (करिष्यामि वा)

(संकल्प की सामग्री को गणेश जी के समीप नीचे छोड़ दें ।)

## अङ्गन्यास-करन्यास

(संकल्प के पश्चात् पुरुष सूक्त के मन्त्रों से अङ्गन्यास-करन्यास करें । पुरुष सूक्त के पूरे मंत्र विष्णुपूजन (शालग्राम पूजन) प्रकरण में लिखे गये हैं, अतः नीचे संकेत मात्र लिखे जाते हैं ।)

**अङ्गन्यासः --**

ॐ सहस्रशीर्षा वामकरे । ॐ पुरुष एदेव ७ सर्व० -- दक्षिणकरे । ॐ एतावानस्य महिमा० -- वामपादे । ॐ त्रिपादूर्ध्व० -- दक्षिणपादे । ॐ ततो विराड० -- वामजानुनि । ॐ तस्माद्यज्ञात्सर्वहुत० -- दक्षिणजानुनि । ॐ तस्माद्य ज्ञात्सर्वहुत ऋचः० -- वामकट्याम् । ॐ तस्मादश्वा० -- दक्षिणकट्याम् । ॐ तं यज्ञम्० -- नाभौ । ॐ यत्पुरुषं व्यदधुः -- हृदि । ॐ ब्राह्मणोऽस्य० -- कण्ठे । ॐ चन्द्रमा मनसो० -- वामबाहौ । ॐ नाभ्या आसी० -- दक्षिणबाहौ । ॐ यत्पुरुषेण० -- मुखे । ॐ सप्तास्या० -- अक्ष्णोः । ॐ यज्ञेन यज्ञ० -- मूर्ध्नि ।

**पञ्चाङ्गन्यासः --**

ॐ अद्भ्यः सम्भृतः० -- हृदये । ॐ वेदाहमेतम्० -- शिरसि । ॐ प्रजापतिश्च० -- शिखायाम् । ॐ यो देवेभ्य आतपति० -- कवचायहुम । ॐ रुचं ब्राह्मम्० -- अस्त्राय फट् ।

**करन्यासः --**

ॐ ब्राह्मणोऽस्य० -- अङ्गुष्ठाभ्यां नमः । ॐ चन्द्रमा० -- तर्जनीभ्यां नमः । ॐ नाभ्या० -- मध्यमाभ्यां नमः । ॐ यत्पुरुषेण० -- अनामिकाभ्यां नमः ॐ सप्तास्यासन्० -- कनिष्ठाभ्यां नमः । ॐ यज्ञेन० -- करतलकरपृष्ठाभ्यां नमः ।

# श्रीगणेशाम्बिकापूजनम्

श्रीगणेश एवं अम्बिका की मूर्ति न रहने पर दो सुपारियों पर मौली लपेटकर उनको तराय अथवा ताम्बे की छननी में चावल पर अष्टदल-कमल बनाकर स्थापित करें । फिर हाथ में अक्षत-पुष्प लेकर नीचे लिखे मंत्रों द्वारा आवाहन करें --

**आवाहनम्** :--

हे हेरम्ब ! त्वमेह्येहि ह्यम्बिकात्र्यम्बकात्मज ।
सिद्धिबुद्धिपते ! त्र्यक्ष ! लक्षलाभपितुः पितः ।।
नागास्यं नागहारं त्वां गणराजं चतुर्भुजम् ।
भूषितं स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ।।
आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ।
इहाऽगत्य गृहाण त्वं पूजां यागं च रक्ष मे ।।

**मन्त्रः** --

ॐ गणानां त्वा गणपति ँ हवामहे प्रियाणां त्वा प्रियपति ँ हवामहे निधीनां त्वा निधिपति ँ हवामहे व्वसो मम । आहमजानि गर्ब्भधमात्त्वम जासि गर्ब्भधम् ।

ॐ भूर्भुवः स्वः सिद्धि-बुद्धि-सहिताय गणपतये नमः गणपतिमावाहयामि स्थापयामि ।

हेमाद्रितनयां देवीं वरदां शंकरप्रियाम ।
लम्बोदरस्य जननीं गौरीमावाहयाम्यहम् ।
ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥
ॐ भूर्भुवः स्वः गौर्यै नमः, गौरीमावाहयामि स्थापयामि ।

**प्राणप्रतिष्ठा :--**

ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य वृहस्पतिर्य्यज्ञमिमं तनोत्वरिष्टं य्यज्ञ ७ समिमं दधातु । विश्वेदेवास ऽइह मादयन्तामो३ प्रतिष्ठ ।
अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥
गणेशाऽम्बिके सुप्रतिष्ठिते वरदे भवेताम् ।
(गणेश जी के समीप अक्षत छोड़ें ।)

**आसनम् :--**

ॐ पुरुष ऽएवेद ७ सर्व्वं य्यद्भूतँ य्यच भाव्व्यम् ।
उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ।
रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ।
आसनं च मया दत्तं गृहाण परमेश्वर ॥
गणेशाम्बिकाभ्यां नमः आसनार्थे पुष्पं समर्पयामि ।
(आसन के लिए पुष्प अर्पण करें ।)

**पाद्यम् :--**

एतावानस्य महिमातो ज्ज्यायाँश्च पुरुषः । पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥
उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् ।
पादप्रक्षालनार्थाय पाद्यं ते प्रतिगृह्यताम् ॥

गणेशाम्बिकाभ्यां नमः पाद्यं समर्पयामि

(जल अर्पण करें ।)

**अर्घ्यम् :--**

ॐ त्रिपादूर्ध्व ऽउदैत्पुरुषः पादोऽस्येहा भवत्पुनः ।

ततो व्विष्ष्वङ् व्यका मत्साशनानशने ऽअभि ।।

रौप्यपात्रे स्थितं तोयं गन्धपुष्पफलान्वितम् ।

सहिरण्यं ददाम्यर्घं गृहाण परमेश्वरः ।।

(गन्ध, अक्षत, पुष्प एवं फल से युक्त जल का अर्घ अर्पण करें ।)

**आचमनीयम् :--**

ॐ ततो व्विराडजायत व्विराजो ऽअधिपूरुषः ।

स जातो ऽअत्यरिच्च्यत पश्चाद्भूमिमथो पुरः ।।

सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् ।

आचम्यार्थं मया दत्तं गृहाण परमेश्वर ।।

गणेशाम्बिकाभ्याम् आचमनं समर्पयामि ।

(जल अर्पण करें ।)

**स्नानम् :--**

ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतं पृपदाज्ज्यम् ।

पशूँस्ताँश्च्यक्रे व्वायव्व्यानारण्ण्या ग्ग्राम्याश्च्च ये ।।

मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् ।

तदिदं कल्पितं देव ! स्नानार्थं प्रतिगृह्यताम् ।।

गणेशाम्बिकाभ्यां स्नानं समर्पयामि ।

(शुद्ध जल से स्नान करायें ।)

**पयःस्नानम् :--**

ॐ पयः पृथिव्यां पयऽओषधीपु पयो दिव्व्यन्तरिक्ष्ये पयो धाः ।

पयस्वतीः प्रदिशः सन्तु मह्यम् ।।

कामधेनुसमुत्पन्नं सर्वसन्तोषकारकम् ।

पयस्तुभ्यं प्रयच्छामि स्नानार्थ प्रतिगृह्यताम् ।।

(दूध से स्नान करायें, पुनः जलस्नान करायें ।)

**दधिस्नानम् :--**

ॐ दधिक्क्राव्णो ऽअकारिषं जिष्णोऽरश्वस्य व्वाजिनः ।

सुरभि नो मुखा करत्प्रण ऽआयू ᳪ षि तारिषत् ।।

पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।

दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ।।

(दधि से स्नान करायें, पुन जलस्नान करायें ।)

**घृतस्नानम् :--**

ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।

अनुष्वधमावह मादयस्व स्वाहाकृतं व्वृषभ वक्षि हव्यम् ।।

नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् ।

घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ।।

(घृत से स्नान करायें, पुन जलस्नान करायें ।)

**मधुस्नानम् :--**

ॐ मधु व्वाता ऽऋतायते मधु क्षरन्ति सिन्धवः माद्ध्वीर्न्नः सन्त्वोषधीः ।

मधु नक्तमुतोषसो मधुमत्त्पार्थिव ᳪ रजः मधु द्यौरस्तुनः पिता ।

मधुमान्नो व्वनस्पतिर्म्मधुमाँ २।। अस्तुसूर्य्यः । माद्ध्वीर्ग्गावो भवन्तु नः ।

तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ।

तेजः पुष्टिकरं दिव्यं स्नानार्थ प्रतिगृह्यताम् ।।

(मधु से स्नान करायें, पुन जलस्नान करायें ।)

**शर्करास्नानम् :--**

ॐ अपा ᳪ रसमुद्वयस ᳪ सूर्य्येसन्त ᳪ समाहितम् । अपा ᳪ रसस्ययो रसस्तम्वो गृह्णण्णम्युत्तमुपयामगृहीतोसीन्द्राय त्त्वा जुष्ट्टंगृह्णण्णाम्येपतेयो-निरिन्द्राय त्त्वा जुष्ट्टतमम् । इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ।

मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ।।

(शर्करा चढ़ावें, पुनः जल-स्नान करायें ।)

## पञ्चामृतस्नानम् :--

ॐ पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सो देशे ऽभवत्सरित् ।।
पयो दधि घृतं चैव शर्करामधुसंयुतम् ।
पञ्चामृतं मयानीतं स्नानार्थ प्रतिगृह्यताम् ।।
गणेशाम्बिकाभ्यां नमः पञ्चामृतस्नानं समर्पयामि ।

(पञ्चामृत से स्नान करायें । पुनः जल-स्नान करायें ।)

## गन्धोदकस्नानम् :--

ॐ गन्धर्व्वस्त्वाव्विश्वावसुः परिदधातुव्विश्वस्यारिष्ट्यैयजमानस्यपरिधि-रस्यग्निरिडऽईडितः ।।

मलयाचलसम्भूतं चन्दनागरुसंयुतम् ।
चन्दनं च मया दत्तं स्नानार्थ प्रतिगृह्यताम् ।।

(गन्धोदक से स्नान कराने के पश्चात् शुद्धोदक से स्नान करायें ।)

## शुद्धोदकस्नानम् :--

ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त ऽआश्विनाः । श्श्येतः श्श्येताक्षोरुणस्ते रुद्राय पशुपतये कर्ण्णा यामाऽ अवलिप्ता रौद्रा नमोरूपाः पार्ज्जन्याः ।।

स्नानार्थ तव देवेश पवित्रं तोयमुत्तमम् ।
तीर्थेभ्यश्च समानीतं गृहाण परमेश्वर ।।
गणेशाम्बिकाभ्यां नमः शुद्धोदकस्नानं समर्पयामि ।

(शुद्ध जल से स्नान करावें ।)

## वस्त्रम् :--

ॐ सुजातो ज्योतिषा सह शर्म्म व्वरूथमासदत्तस्वः ।
व्वासो ऽअग्गने व्विश्वरूप ँ संव्ययस्व विभावसो ।।

सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥
(वस्त्र अर्पण करें, पुनः जल छोड़ें ।)

**यज्ञोपवीतम् :--**

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥
नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं मया दत्तं गृहाण परमेश्वर ॥
गणेशाय नमः यज्ञोपवीतं समर्पयामि ।
(जनेऊ अर्पण कर आचमन करायें ।)

**गन्धम् (चन्दनम्) :--**

ॐ त्वांगन्धर्व्वा ऽअखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ।
त्वामोषधे सोमो राजा व्विद्वान्यक्ष्मादमुच्च्यत ॥
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर ॥
गणेशाम्बिकाभ्यां नमः चन्दनं समर्पयामि ।
(चन्दन चढ़ायें ।)

**अक्षता :--**

ॐ अक्षन्नमीमदन्त ह्यवप्रिया ऽअधूषत ।
अस्तोषत स्वभानवो व्विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥
अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभनाः ।
मया निवेदिता भक्त्या गृहाण परमेश्वर ॥
गणेशाम्बिकाभ्यां नमः अक्षतान् समर्पयामि ।
(चावल चढ़ावें ।)

**पुष्पाणि :--**

ॐ ओषधीः प्रतिमोदद्ध्वं पुष्पवतीः प्रसूवरीः ।
अश्श्वा ऽइव सजित्त्वरीर्व्वीरुधः पारयिष्ण्वः ॥

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाऽऽनीतानि पुष्पाणि पूजार्थ प्रतिगृह्यताम् ।।
गणेशाम्बिकाभ्यां नमः पुष्पं समर्पयामि ।
(पुष्प चढ़ावें ।)

## दूर्वाङ्कुरान् :-

ॐ काण्डात् काण्डात्प्ररोहन्ती परुषः परुषस्पपरि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ।
दूर्वे ह्यमृतसम्पन्ने शतमूले शताङ्कुरे ।
शतं पातक-संहन्त्री शतमायुष्यवर्धिनी ।।
विष्णवादिसर्वदेवानां दूर्वे त्वं प्रीतिदा सदा ।
क्षीरसागरसम्भूते वंशवृद्धिकरी भव ।।
गणेशाम्बिकाभ्यां नमः दूर्वांकुरान् समर्पयामि ।
(दूर्वा चढ़ावें ।)

## बिल्वपत्रम् :-

ॐ नमो बिल्मिने च कवचिने च नमो व्वर्मिणे च वरूथिने च नमः ।
श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे ।
त्रिशाखैर्विल्वपत्रैश्च अछिद्रैः कोमलैः शुभैः ।
तव पूजां करिष्यामि गृहाण परमेश्वर ।।
(बेलपत्र चढ़ायें ।)

## कुङ्कुमम् :-

कुङ्कुमं कामनादिव्यं कामनाकामसम्भवम् ।
कुङ्कुमेनार्चितो देव गृहाण परमेश्वर ।।
गणेशाम्बिकाभ्यां नमः कुङ्कुमम् समर्पयामि । (रोली चढ़ावें ।)

## सिन्दूरम् :-

ॐ सिन्धोरिष प्राद्ध्वने शुघनासो व्वातप्रमियः पतयन्ति यह्वाः घृतस्व धाराऽअरुषो न व्वाजी काष्ट्ठा भिन्दन्नूर्मिभिः पिन्वमानः ।
सिन्दूरं शोभनं रक्तं सौभाग्यं सुखवर्धनम् ।
शुभदं कामदं चैव सिन्दूरं प्रतिगृह्यताम् ।।
गणेशाम्बिकाभ्यां नमः सिन्दूरम् समर्पयामि ।(सिन्दूर चढ़ावें ।)

**अबीरगुलालम् :--**

अवीरं च गुलालञ्च चोवा चन्दनमेव च ।
अवीरेणार्चितो देव ! अतः शान्ति प्रयच्छ मे ।।
गणेशाम्बिकाभ्यां नमः अवीर-गुलालं समर्पयामि ।

(अबीर-गुलाल चढ़ावें ।)

**सुगन्धितद्रव्याणि: --**

ॐ अ७ शुना ते अ७शुः पृच्यतां परुषा परुः ।
गन्धस्ते सोममवतु मदाय रसोऽअच्युतः ।।
चम्पकाशोकवकुल्मालतीमोगरादिभिः ।
वासितं स्निग्धाहेतु तैलं चारु प्रगृह्यताम् ।।
गणेशाम्बिकाभ्यां नमः सुगन्धितद्रव्यम् समर्पयामि ।

(इत्र-अतर चढ़ायें ।)

**धूपम् :--**

ॐ धूरसि धूर्व्वधूर्व्वन्तं धूर्व्वतँय्योस्माम्धूर्वति तन्धूर्व्वयं व्वयं धूर्व्वामः । देवानामसि व्वहितम् ७ सस्नितमं पप्रितमं जुष्टटतमं देवहूतमम् ।

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध-उत्तमः ।
आघ्रेय सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।
गणेशाम्बिकाभ्यां नमः धूपमाघ्रापयामि । (धूप अर्पण करें ।)

**दीपम् :--**

ॐ अग्निर्ज्योतिर्ज्जोतिरग्निः स्वाहा सुर्यो ज्योतिर्ज्जोतिः सूर्यः स्वाहा । अग्निर्व्वर्ञ्चोज्योतिर्व्वर्चः स्वाहा सूर्य्योव्वर्ञ्चोज्योतिर्व्वर्च्चः स्वाहा । ज्योतिः सुर्य्यः सूर्य्योज्योति स्वाहा ।

(साज्यं) साज्यञ्च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ।।
गणेशाम्बिकाभ्यां नमः दीपं दर्शयामि ।

(दीपक की ओर चावल छोड़कर हस्त प्रक्षालण करें ।)

5 **नैवेद्यम् :--**

ॐ नाभ्या ऽआसीदन्तरिक्ष ँ शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ऽअकल्पयन् ॥
शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।
आहारं भक्ष्यभोज्यञ्च नैवेद्यं प्रतिगृह्यताम् ॥ (प्रसाद अर्पण करें ।)

गणेशाम्बिकाभ्यां नमः नैवेद्यं समर्पयामि । धेनुमुद्रयाऽमृतीकृत्य ग्रासमुद्राः प्रदर्शयेत् । ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा । आचमनीयं समर्पयामि ।

**मध्ये पानीयम् :--**

अतितृप्तिकरं तोयं सुगन्धि च पिबेच्छया ।
त्वयि तृप्ते जगत्तृप्तं नित्यतृप्ते महात्मनि ॥
गणेशाम्बिकाभ्यां नमः मध्ये पानीयं समर्पयामि ।(जल चढ़ावें ।)

**ऋतुफलम् :--**

ॐ याः फलिनीर्या ऽअफला ऽअपुष्पायाश्च पुष्पिणीः ।
वृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व ँ हसः ॥
इदं फलं मया देव स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥
गणेशाम्बिकाभ्यां नमः अखण्डऋतुफलं समर्पयामि ॥(फल चढ़ावें ।)

**मुखवासार्थे ताम्बूलम् :--**

ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
व्वसन्तोऽस्यासीदाज्ज्यं ग्रीष्म इध्मः शरद्धविः ॥
पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥
गणेशाम्बिकाभ्यां नमः मुखवासार्थे पूगीफल-ताम्बूलं समर्पयामि ।
(पान-सुपारी अर्पण करें ।)

**दक्षिणाम् :--**

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
सदाधार पृथिवी द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

गणेशाम्बिकाभ्यां नमः कृतायाः पूजयाः साद्गुण्यार्थे द्रव्यदक्षिणां समर्पयामि । (दक्षिणा अर्पण करें ।)

**कर्पूरारार्तिक्यम् :--**

ॐ आरात्रिपार्थिव ँ रजः पितुरप्रायिधामभिः । दिवः सदा ँ सिबृहतीव्वितिष्ठ्ठस ऽआत्त्वेषव्वर्त्तते तमः ॥ ॐ अग्निर्देवता व्वातोदेवता सूर्य्योदेवता चन्द्रमादेवता व्वसवोदेवता रुद्रादेवता दित्त्यादेवता मरुतोदेवता विश्वे देवा देवता वृहस्पतिर्देवतेन्द्रोदेवता व्वरुणोदेवता ।

गणेशाम्बिकाभ्यां नमः कर्पूरनीराजनमं समर्पयामि ॥ (आरती करें ।)

**पुष्पाञ्जलि :--**

नाना-सुगन्धि-पुष्पाणि यथाकालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्त गृहाण परमेश्वर ॥

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः ॥

ॐ राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यं । कामेश्वरो वैश्रवणो ददातु । कुवेराय वैश्रवणाय महाराजाय नमः । ॐ स्वस्ति । साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्य राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौमः सार्वायुषऽआन्तादापरार्धात् । पृथिव्यै समुद्रपर्यन्ताया एकराडिति । तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्याऽऽवसन्गृहे । आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति । ॐ विश्वतश्चक्षुरुत विश्वतो मुखोव्विश्वतो बाहुरुतव्विश्वतस्पात् । सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥

जानामि पूजनमहं नहि शास्त्रसिद्धं शक्तिस्तु तं परिचिता मम सर्वतश्च ।
पुष्पाञ्जलिर्भगवतश्चरणाब्जयोस्ते सन्दीयते परिगृहाण विसृज्य दोषान् ।।

गणेशाम्बिकाभ्यां नमः मन्त्रपुष्पाञ्जलिं समर्पयामि । (पुष्पाञ्जलि चढ़ावें ।)

**प्रदक्षिणा :--**

यानि कानि च पापानि ज्ञाताऽज्ञात -- कृतानि च ।
तानि सर्वाणि नश्यन्ति प्रदक्षिणां पदे पदे ।।
पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ।
तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ।।
ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ।
तेषां ७ सहस्त्रयोजनेव धन्वानि तन्मसि ।।
गणेशाम्बिकाभ्यां नमः प्रदक्षिणां समर्पयामि ।

**विशेषार्घ :--**

जल-गन्धाऽक्षत -- फल -- पुष्प दूर्वा-दक्षिणाः ताम्रपात्रे प्रक्षिप्य अवनिकृतजानुमण्डलं कृत्वा, अर्घपात्रमञ्जलिना गृहीत्वा श्लोकान् पठेत् ।

रक्ष रक्ष गणाध्यक्ष ! रक्ष त्रैलोक्यरक्षकः ।
भक्तानामभयं कर्ता त्राता भव भवार्णवात् ।।
द्वैमातुर ! कृपासिन्धो ! षाण्मातुराग्रज प्रभो !
वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ।
अनेन सफलार्घेण सफलोस्तु सदा मम ।।
गणेशाम्बिकाभ्यां नमः विशेषार्घ्यं समर्पयामि ।

**प्रार्थना :--**

विघ्नेश्वराय वरदाय सुरप्रियाय
लम्बोदराय सकलाय जगद्धिताय ।
नागाननाय श्रुतियज्ञविभूषिताय
गौरीसुताय गणनाथ ! नमो नमस्ते ।।
भक्तार्तिनाशनपराय गणेश्वराय
सर्वेश्वराय शुभदाय सुरेश्वराय ।

विद्याधराय विकटाय च वामनाय
भक्तप्रसन्नवरदाय नमो नमस्ते ।।
नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ।
नमस्ते रुद्ररूपाय करिरूपाय ते नमः ।।
विश्वरूप-स्वरूपाय नमस्ते ब्रह्मचारिणे ।
भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ।।
लम्बोदर ! नमस्तुभ्यं सततं मोदकप्रिय !
निर्विघ्नं कुरु मे देव ! सर्वकार्येषु सर्वदा ।।
त्वां विघ्नशत्रुदलनेति च सुन्दरेति
भक्तप्रियेति सुखदेति फलप्रदेति ।
विद्याप्रदेत्यघहरेति च ये स्तुवन्ति
तेभ्योगणेश ! वरदो भव नित्यमेव ।।
गणेशपूजने कर्म यन्न्यूनमधिकं कृतम् ।
तेन सर्वेण सर्वात्मा प्रसन्नोऽस्तु सदा मम ।।
अनया पूजया गणेशाम्बिके प्रीयेतां न मम ।।

**षड्विनायक पूजनम् :--**

मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ।
अविघ्नो विघ्नहर्ता च षडेते विघ्ननायकाः ।।

ॐ भूर्भुवः स्वः मोद ! इहागच्छ, इहतिष्ठ । मोदाय नमः ।
ॐ भूर्भुवः स्वः प्रमोद ! इहागच्छ, इहतिष्ठ । प्रमोदाय नमः ।
ॐ भूर्भुवः स्वः सुमुख ! इहागच्छ, इहतिष्ठ । सुमुखाय नमः ।
ॐ भूर्भुवः स्वः दुर्मुख ! इहागच्छ, इहतिष्ठ । दुर्मुखाय नमः ।
ॐ भूर्भुवः स्वः अविघ्न ! इहागच्छ, इहतिष्ठ । अविघ्नाय नमः ।
ॐ भूर्भुवः स्वः विघ्नहर्तार ! इहागच्छ, इहतिष्ठ । विघ्नहर्त्रे नमः ।
ॐ मोदादि षड्विनायकेभ्यो नमः पूजयामि ।

(षोडशोपचार पूजन करें ।)

# कलश पूजनम्

सर्व-प्रथम कलश में रोली से स्वस्तिक चिह्न (सतिया) बनाकर एवं उसके गले में मौली लपेटकर पूजक को अपनी बांयी ओर अबीर-गुलाल से अष्टदल-कमल बनाकर उस पर सप्तधान्य या चावल अथवा गेहूँ रखकर उसके ऊपर कलश को स्थापित कर निम्न विधान से पूजन करना चाहिए ।

## भूमिं स्पृशेत् :--

ॐ मही द्यौः पृथिवी च नऽइमं यज्ञम्मिमिक्षताम् ।

पिपृतान्नो भरीमभिः ।

विश्वाधाराऽसि धरणी शेषनागोपरि स्थिता ।

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।। (भूमि का स्पर्श करें ।)

## धान्यप्रक्षेप :--

ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ।

यस्मै कृणोति ब्राह्मणस्त ᳪ राजन्पारयामसि ।

(पृथ्वी पर सप्तधान्य रखें ।)

## कलशं स्थापयेत् :--

ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्ज्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः ।

हेमरूप्यादिसम्भूतं ताम्रजं सुदृढं नवम् ।

कलशं धौतकल्माषं छिद्रवर्णविवर्जितम् ।।

(सप्तधान्य पर कलश का स्थापन करें ।)

**कलशे जलपूरणम् :--**

ॐ वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्ज्जनीस्त्थो वरुणस्य ऽऋतसदन्न्यसि वरुणस्य ऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ।।

जीवनं सर्वजीवानां पावनं पावनात्मकम् ।

वीजं सर्वौपधीनां च तज्जलं पूरयाम्यहम् ।। (कलश में जल डाल दें ।)

**गन्धप्रक्षेप :--**

ॐ त्वांगन्धर्व्वाऽअखनं स्त्वामिन्द्रस्त्त्वां वृहस्पतिः ।
त्वामोपधे सोमो राजा व्विद्वान्न्यक्क्ष्मादमुच्च्यत ।।
केशरागरुकंकोल घनसारसमन्वितम् ।
मृगनाभियुतं गन्धं कलशे प्रक्षिपाम्यहम ।।

(कलश में चन्दन या रोली छोड़ें ।)

**धान्यप्रक्षेप :--**

ॐ धान्न्यमसि धिनु हि देवान्प्राणायत्त्वो दानायत्त्वा व्यानायत्त्वा । दीर्ग्घामनु प्रसितिमायुपेधान्देवोवः सविताहिरण्यपाणिः प्प्रतिगृब्ण्णात्त्वच्छिद्रेण पाणिना चक्क्षुषेत्त्वा महीनां पयोऽसि ।

धान्यौपधी मनुष्याणां जीवनं परमं स्मृतम् ।
निर्मिता ब्रह्मणा पूर्व कलशे प्रक्षिपाम्यहम् ।।

(कलश में सप्तधान्य छोड़ दें ।)

**सर्वौषधीप्रक्षेप :--**

ॐ या ऽओपधीः पूर्व्वा जातादेवेब्भ्यस्त्रियुगम्पुरा ।
मनैनुवब्भ्रूणामह ७ शतंधामानिसप्त च ।।
ओपध्यः सर्वृक्षाणां तृणगुल्मलतास्तु याः ।
दूर्वासर्पप-संयुक्ताः कलशे प्रक्षिपाम्यहम् ।।

(कलश में सर्वोपधि डालें ।)

**दूर्वाप्रक्षेप :--**

ॐ काण्डात्त्काण्डात्त्प्ररोहन्ती परुपः परुपस्प्परि ।
एवानो दूर्व्वे प्प्रतनु सहस्रेण शतेन च ।
दूर्वेह्यमृतसम्पन्ने शतमूले शताङ्कुरे ।
शतं पातकसंहन्त्री कलशे प्रक्षिपाम्यहम् ।।

(कलश में दूर्वा छोड़ें ।)

**पञ्चपल्लवप्रक्षेप :--**

ॐ अश्वत्थेवोनिपदनम्पर्णेवोव्वसतिष्कृता ।
गोभाजऽइत्तिकलासथयत्त्सनवथपूरुषम् ।।
अश्वत्थोदुम्वरप्लक्षचूतन्यग्रोधपल्लवाः ।
पञ्चैतान् पल्लवानस्मिन् कलशे प्रक्षिपाम्यहम् ।।
(कलश में पञ्चपल्लव अथवा आम का पत्ता रखें ।)

**सप्तमृदांप्रक्षेपः :--**

ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ।
यच्छानः शर्म्मसप्रथाः ।।
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गभाद्हृदात् ।
राजस्थानाञ्च गोष्ठाञ्च मृदमानीय निक्षिपेत् ।।
(कलश में सप्तमृत्तिका या मिट्टी छोड़ें ।)

**फलप्रक्षेप :--**

ॐ याः फलिनीर्य्या ऽअफला ऽअपुष्पायाश्च पुष्पिणीः ।
वृहस्पतिप्रसूतास्ता नोमुञ्चन्त्व ७ हसः ।।
पूगीफलमिदं दिव्यं पवित्रं पुण्यदं नृणाम् ।
हारकं पापपुञ्जानां कलशे प्रक्षिपाम्यहम् ।।
(कलश में सुपारी छोड़ें ।)

**पञ्चरत्नप्रक्षेप :--**

ॐ परिवाजपतिः कविरग्निर्हव्व्यान्त्यक्रमीत् । दधद्रत्नानिदाशुषे ।
कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ।।
एतानि पञ्चरत्नानि कलशे प्रक्षिपाम्यहम् ।
(कलश में पञ्चरत्न डालें ।)

**हिरण्यप्रक्षेप :--**

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्यजातः पतिरेक ऽआसीत् ।
सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा व्विधेम ।।
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदं कलशे प्रक्षिपाम्यहम् ।।
(कलश में दक्षिणा छोड़ें ।)

**रक्तसूत्रेण वस्त्रेण वा कलशं वेष्टयेत् :--**

ॐ सुजातो ज्ज्योतिषा सह शर्म्मव्वरूथमासदत्त्स्वः ।
व्वासोऽ अग्नेव्विश्वरूप ᳪ संव्ययस्व व्विभावसो ।।
सूत्रं कर्पाससम्भूतं ब्रह्मणा निर्मितं पुरा ।
येन बद्धं जगत्सर्व तेनेमं वेष्टयाम्यहम् ।।

(कलश में लालवस्त्र अथवा मौली लपेट दें ।)

**कलशस्योपरि पूर्णपात्रं न्यसेत् :--**

ॐ पूर्णादर्व्वि परापतसुपूर्ण्णा पुनरापत ।
व्वस्नेव व्विक्क्रीणावहाऽइषमूर्ज्ज ᳪ शतक्क्रतो ।।
पिधानं सर्ववस्तूनां सर्वकार्यार्थसाधनम् ।
सम्पूर्णः कलशो येन पात्रं तत्कलशोपरि ।।

(कलश पर पूर्णपात्र रखें ।)

**पूर्णपात्रोपरि श्रीफलं नारिकेलं वा न्यसेत् :--**

ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणांमुन्मइषाण सर्वलोकं म इषाण ।

(पूर्णपात्र पर नारियल रखें ।)

**वरुणमावाहयेत् :--**

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्ब्भिः ।
अहेडमानो वरुणेह बोध्युरुश ᳪ स मा नऽ आयुः प्रमोषीः ।।
भगवन्वरुणागच्छ त्वमस्मिन् कलशे प्रभो !
कुर्वेऽत्रैव प्रतिष्ठां ते जलानां शुद्धिहेतवे ।।

अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि । ॐ अपांपतये वरुणाय नमः । इति पञ्चोपचारैर्वरुणं सम्पूज्य ।

**कलशस्थितदेवानां नदीनाम् तीर्थानाम् च आवाहनम् --**

कलाकला हि देवानां दानवानां कलाकलाः ।
संगृह्य निर्मितो यस्मात् कलशस्तेन कथ्यते ।।
कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूलेत्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।।

कुक्षौ तु सागराः सप्त सप्तद्वीपा च मेदिनी ।

अर्जुनी गोमती चैव चन्द्रभागा सरस्वती ।।

कावेरी कृष्णवेणा च गङ्गा चैव महानदी ।

तापी गोदावरी चैव माहेन्द्री नर्मदा तथा ।।

नदाश्च विविधा जाता नद्यः सर्वास्तथापराः ।

पृथिव्यां यानि तीर्थानि कलशस्थानि यानि वै ।।

सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।

आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ।।

ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ।

अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।।

अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ।

आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ।।

(ऊपर के श्लोकों को पढ़ते हुए अक्षत छोड़ें ।)

## अक्षतान् गृहीत्वा प्राणप्रतिष्ठां कुर्यात् :--

ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमं तनोत्वरिष्टं यज्ञ ꣳ समिमं दधातु । विश्वेदेवासऽइहमादयन्तामो ॐ प्रतिष्ठ ।। कलशे वरुणाद्यावाहितदेवताः सुप्रतिष्ठिताः वरदाः भवन्तु । ॐ वरुणाद्यावाहितदेवताभ्यो नमः । विष्णवाद्यावाहितदेवताभ्यो नमः ।

(कलश पर चावल छोड़कर स्पर्श करें ।)

## कलशस्य चतुर्दिक्षु चतुर्वेदान्पूजयेत् :--

पूर्वे -- ऋग्वेदाय नमः । दक्षिणे -- यजुर्वेदाय नमः । पश्चिमे - सामवेदाय नमः । उत्तरे -- अथर्ववेदाय नमः । कलशमध्ये अपाम्पतये वरुणाय नमः ।

(कलश के चारों तरफ तथा मध्य में चावल छोड़ें ।)

## षोडशोपचारैः पूजनम् कुर्यात् :--

आसनार्थेऽक्षतान समर्पयामि । पादयोः पाद्यं समर्पयामि । हस्तयोः अर्घ्य

समर्पयामि । आचमनं समर्पयामि । पञ्चामृतस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । स्नानाङ्गाचमनं समर्पयामि । वस्त्रं समर्पयामि । आचमनं समर्पयामि । यज्ञोपवीतं समर्पयामि । आचमनं समर्पयामि । उपवस्त्रं समर्पयामि । गन्धं समर्पयामि । अक्षतान् समर्पयामि । पुष्पमालां समर्पयामि । नानापरिमलद्रव्याणि समर्पयामि । धूपमाघ्रापयामि । दीपं दर्शयामि । हस्तप्रक्षालनम् । नैवेद्यं समर्पयामि । आचमनीयं समर्पयामि ।

मध्ये पानीयम् उत्तरापोशनं च समर्पयामि । ताम्बूलं समर्पयामि । पूगीफलं समर्पयामि । कृतायाः पूजायाः षाड्गुण्यार्थे द्रव्यदक्षिणां समर्पयामि । मन्त्रपुष्पाञ्जलिं समर्पयामि । अनया पूजया वरुणाद्यावाहितदेवताः प्रीयन्तां न मम ।

**कलश-प्रार्थना :--**

देवदानव-संवादे मध्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ ! विधृतो विष्णुना स्वयम् ।।१।।
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ।।२।।
शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ।।३।।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ! ।
सान्निध्यं कुरु मे देव ! प्रसन्नो भव सर्वदा ।।४।।
नमो नमस्ते स्फटिकप्रभाय
सुश्वेतहाराय सुमङ्गलाय ।
सुपाशहस्ताय झषासनाय
जलाधिनाथाय नमो नमस्ते ।।५।।
पाशपाणे ! नमस्तुभ्यं पद्मिनीजीवनायक ! ।
पुण्याहवाचनं यावत् तावत्त्वं सन्निधौ भव ।।६।।

# पुण्याहवाचनम्

(वरुण कलश से पुण्याहवाचन करना समीचीन नहीं है अतः पुण्याहवाचन के लिए एक मिट्टी ताँबे या चाँदी की छोटी लोटिया में जल भरकर वरुण-कलश के पूजन के साथ उसके समीप ही स्थापित कर उसी विधान से पूजन कर पुण्याहवाचन करें ।)

ततो यजमानः स्व दक्षिणतो युग्मान् चतुरो वा ब्राह्मणान् उदङ्मुखान् उपवेश्य संकल्पं कुर्यात् । देशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकशर्म्मा, वर्मागुप्तोऽहं अमुककर्मणि सर्वाभ्युदय, प्राप्तये एभिर्ब्राह्मणैः पुण्याऽहं वाचयिष्ये, तदङ्गतया ब्राह्मणानां पूजनं वरणं च करिष्ये । एवं संकल्पं कृत्वा ब्राह्मणेभ्योऽर्घ दद्यात् ।

**मन्त्र :--**

भूमिदेवाग्रजन्मासि त्वं विप्र पुरुषोत्तम ।
प्रत्यक्षो यज्ञपुरुषो ह्यर्घोऽयं प्रतिगृह्यताम् ।।

(ब्राह्मणों के हाथ में जल दें ।)

**इत्यर्घ हस्ते दत्त्वा पूजयेत् :--**

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।।
नमोऽस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ।।

(गन्धाक्षत पुष्प से पूजन कर ब्राह्मणों का वरण करें ।)

**गन्धाक्षतपुष्पादिभिः सम्पूज्य वरणं कुर्यात्** :— एभिर्गन्धाक्षत-पुष्पपूगीफलद्रव्यैः अमुककर्मणि सर्वाभ्युदयप्राप्तये पुण्याहवाचनार्थं ब्राह्मणं त्वामहं वृणे । वृतोऽस्मि इति प्रत्युक्तिः ब्राह्मणस्या एवं क्रमेण ब्राह्मणानां वरणां कृत्वा सर्वेभ्योऽञ्जलिं बध्वा मन्त्र पठेत् ।

**मन्त्र :--**

ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेन आवः ।
स बुध्न्याऽउपमाऽ अस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः ।।
ॐ बृहस्पते अति यदर्य्योऽअर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ।।

(ब्राह्मणों को नमस्कार करें ।)

(दोनों घुटनों को पृथ्वी पर मोड़कर, कमल के सदृश अपनी अञ्जलि को सिर पर रखकर, दाहिने हाथ में जलपूर्ण कलश को यजमान अपने सिर से स्पर्श कर अपने आशीर्वाद के लिए ब्राह्मणों से प्रार्थना करें ।)

**यजमान :--**

दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ।
तेनाऽऽयुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ।।

(ऐसा यजमान बोले ।)

विप्रा :-- अस्तु दीर्घमायुः । (तीन बार ऐसा कहें ।)

यजमान :-- ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् । तेनायुष्प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति भवन्तो ब्रुवन्तु ।

द्विजा :-- पुण्यं पुण्याहं दीर्घमायुरस्तु ।
(एवं द्विरपरं शिरसि भूमौ निधाय)

(दो बार सिर से उस कलश का स्पर्श कर रख दें ।)

**यजमान :--**

अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणानां करे न्यस्ता शिवा आपो भवन्तु नः ।।

**शिवा आपः सन्तु --**

(ऐसा बोल कर ब्राह्मणों के हाथ में जल दें ।)

ब्राह्मणा :-- सन्तु शिवा आपः ।

यजमान :-- लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।
सा मे वसतु वै नित्यं सौमनस्यं सदाऽस्तु मे ।।

**सौमनस्यमस्तु ।**

(ब्राह्मणों के हाथ में पुष्प दें ।)

ब्राह्मणा :-- अस्तु सौमनस्यम् ।

यजमान :-- अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम् ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ।।
अक्षतञ्चारिष्टं चास्तु ।

(ब्राह्मणों के हाथ में चावल दें ।)

ब्राह्मणा :-- अस्त्वक्षतमरिष्टञ्च ।

यजमान :-- गन्धाः पान्तु । (ब्राह्मणों के हाथ में चन्दन दें ।)

ब्राह्मणा :-- सुमङ्गल्यञ्चास्तु ।

यजमान :-- पुनरक्षताः पान्तु । (विप्रों के हाथों में अक्षत पुनः दें ।)

ब्राह्मणा :-- आयुष्यमस्तु ।

यजमान :-- पुष्पाणि पान्तु । (ब्राह्मणों के हाथ में पुष्प दें ।)

ब्राह्मणा :-- सौश्रियमस्तु ।

यजमान :-- सफलताम्बूलानि पान्तु । (ब्राह्मणों के हाथ में सुपारी के साथ पान दें ।)

ब्राह्मणा :-- ऐश्वर्यमस्तु ।

यजमान :-- दक्षिणाः पान्तु । (श्रद्धानुसार ब्राह्मणों को दक्षिणा दें ।)

ब्राह्मणा :-- बहुदयं चास्तु ।

यजमान :-- पुनरत्रापः पान्तु । (ब्राह्मणों के हाथ में पुनः जल दें ।)

ब्राह्मणा :-- स्वरचितमस्तु ।

यजमान :-- दीर्घमायुः, शान्तिः, पुष्टिः, श्रीर्यशोविद्या-विनयो वित्तं बहुपुत्रं बहुधनञ्चास्तु ।

ब्राह्मणा :-- अस्तु ।

यजमान :-- यं कृत्वा सर्ववेदयज्ञक्रियाकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोंङ्कारमादिं कृत्वा ऋग्यजुः सामाथर्वाशीर्वचनं बहुऋषिसम्मतं भवद्भिरनुज्ञातः पुण्यं पुण्याहम् वाचयिष्यं ।

ब्राह्मणा :-- वाच्यताम् ।

**मन्त्राः -- ऋग्वेद --**

ॐ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्रयंसत् । द्रविणोदा वीरवतीमिषन्नो द्रविणोदा रासते दीर्घमायुः ।।१।। सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताऽधरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ।।२।। नवोनवो भवति जायमानोऽ ह्नमङ्केतुरुपसामेत्यग्रम् । भागं देवेभ्यो विदधात्यायं प्र चन्द्रमास्तिरते दीर्घमायुः ।।३।। उच्चा दिवि दक्षिणावन्तो अस्थुर्येऽअश्वदाः सह ते सूर्येण । हिरण्यदा

अमृतत्वं भजन्ते वासोदा: सोम प्र तिरन्त आयु: ।।४।।

**मन्त्रा: -- यजुर्वेद --**

ॐ भद्रं कर्णेभि: श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्रा: । स्थिरैरङ्गैस्तुष्टुवा ७ सस्तनूभिर्व्यशेमहि देवहितं यदायु: ।।१।। देवाना भद्रा सुमतिर्ऋजूयतां देवाना ७ रातिरभि नो निवर्त्तताम् । देवाना ७ सख्यमुपसेदिमा व्वयं देवा न ऽआयु: प्रतिरन्तु जीवसे ।।२।। दीघायुस्त्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथो त्वं दीर्घायुर्भूत्वा शतवल्शा व्विरोहतात् ।।३।।

**मन्त्रौ -- सामवेद --**

ॐ देवो ३ वो द्रविणो दा: पूर्णा विवष्ट्वा सिचम् । ऊर्द्धा १ सिञ्चा २ । ध्वमुपवापृणध्वम् । आदिद्धोदे २ । व ऊहते । इडा २.३ भा ३.४.३ । ऊं २.३.४.५. इ । डा ।।१।।

अद्यनों देव सवित: । ओ हो वा. । इह श्रुधायि । प्रजावा २.३. त्सा । वी: सौभगाम् । परादू २.३. ष्वा ३ । हो वा ३ हा । प्रिय ७ सु २.३.४.५. वा ६.५.६. दक्षा ३ या २.३.४.५. ।।२।।

**मन्त्रा: -- अथर्ववेद --**

धातारातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नोऽअग्नि: । त्वष्टा विष्णु: प्रजया संरराणो यजमानाय द्रविणं दधातु ।।१।। येन देवं सवितारं पतिदेवा अधारयन् । तेनेमं ब्रह्मणस्पते परिराष्ट्राय धत्तन ।।२।। नवोनवो भवसि जायमानोऽह्नांकेतुरुषसामेष्यग्रम् । भागं देवेभ्यो विदधास्यायन्प्रचन्द्रमस्तिरसेदीर्घमायु: ।।३।। उच्चैर्घोषो दुन्दुभि: सन्त्वनायन्वानस्पत्यसम्भृत उस्रियाभि: । वाचं क्षणुवानोदमयन् त्सपत्नान्त्सिंह इव जेष्यमभिषंस्तनीहि ।।४।।

(इत्येता ऋच पुण्याहे ब्रूयात्)

**विप्रा: --**

करोतु स्वस्ति ते ब्रह्मा स्वस्ति चाऽपि द्विजातय: ।
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा ।।१।।
ययातिर्नहुषश्चैव धुन्धुमारो भगीरथ: ।
तुभ्यं राजर्षय: सर्वे स्वस्ति कुर्वन्तु नित्यश: ।।२।।

स्वस्ति तेऽस्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च ।
स्वस्त्यस्त्वापादकेभ्यश्च सर्वेभ्यः स्वस्ति ते सदा ।।३।।
स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा ।
करोतु स्वस्ति वेदादिर्नित्यं तव महामखे ।।४।।
लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ ।
असितो देवलश्चैव विश्वामित्रस्थताऽङ्गिराः ।।५।।
वशिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्ति ते सदा ।
धाता विधाता लोकेशो दिशश्च सदिगीश्वराः ।।६।।
स्वस्ति तेऽद्य प्रयच्छन्तु कार्तिकेयश्च षण्मुखः ।
विवस्वान् भगवान् स्वस्ति करोतु तव सर्वदा ।।७।।
दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः ।
अधस्ताद् धरणीं चाऽसौ नागो धारयते हि यः ।
शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ।।८।।

**यजमान :--**

व्रतजपनियमतपः स्वाध्याय-क्रतुशमदमदयादानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् ।

ब्राह्मणा :-- समाहितमनसः स्मः ।

यजमान :-- प्रसीदन्तु भवन्तः ।

ब्राह्मणा :-- प्रसन्नाः स्मः ।

(इसके बाद पुण्याहवाचन वाले कलश को बायें हाथ में लेकर दाहिने हाथ से आम्र पल्लव अथवा दूर्वा द्वारा प्रथम पात्र में आगे के प्रत्येक मंत्र से जल छोड़ें ।)

**यजमान :--**

ॐ शान्तिरस्तु । द्विजाः -- अस्तु । ॐ पुष्टिरस्तु । द्विजाः -- अस्तु । ॐ तुष्टिरस्तु । एवं सर्वत्रोत्तरम् द्विजैर्वाच्यम् । ॐ वृद्धिरस्तु । ॐ अविघ्नमस्तु । ॐ आयुष्यमस्तु । ॐ आरोग्यमस्तु । ॐ शिवमस्तु । ॐ शिवं कर्मास्तु । ॐ कर्मसमृद्धिरस्तु । ॐ धर्मसमृद्धिरस्तुः । ॐ वेदसमृद्धिरस्तु । ॐ शास्त्र समृद्धिरस्तु । ॐ धनधान्यसमृद्धिरस्तु । पत्रपौत्रसमृद्धिरस्तु । ॐ इष्टसम्पदस्तु ।

द्वितीयपात्रे -- ॐ अनिष्टनिरसनमस्तु । ॐ यत्पापं रोगमशुभमकल्याणं तद् दूरे प्रतिहतमस्तु ।

प्रथमपात्रे -- ॐ यच्छ्रेयस्तदस्तु । ॐ उत्तरे कर्मणि निर्विघ्नमस्तु । ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु । ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् ।

तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु । ॐ तिथिकरणमुहूर्तनक्षत्रग्रह-लग्नाधिदेवताः प्रीयन्ताम् । ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधिदैवते प्रीयेताम् । ॐ दुर्गापाञ्चाल्यौ प्रीयेताम् । ॐ अग्निपुरोगाः विश्वेदेवाः प्रीयन्ताम् । ॐ इन्द्रपुरोगा मरुद्‌गणाः प्रीयन्ताम् । ॐ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् । ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् । ॐ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् । ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् । ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् । ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् । ॐ श्री सरस्वत्यौ प्रीयेताम् । ॐ श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । ॐ भगवती माहेश्वरी प्रीयताम् । ॐ भगवती पुष्टिकरी प्रीयताम् । ॐ भगवती तुष्टिकरी प्रीयताम् । ॐ भगवति ऋद्धिकरी प्रीयताम् । ॐ भगवती वृद्धिकरी प्रीयताम् । ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम् । ॐ सर्वाः कुलदेवताः प्रीयन्ताम् । ॐ सर्वा ग्रामदेवताः प्रीयन्ताम् । ॐ सर्वा इष्टदेवताः प्रीयन्ताम् । ॐ पुनः द्वितीयपात्रे -- ॐ हताश्च ब्रह्मद्विषः । ॐ हताश्च परिपन्थिनः । ॐ हताश्च विघ्नकर्तारः । ॐ शत्रवः पराभवं यान्तु । ॐ शाम्यन्तु घोराणि । ॐ शाम्यन्तु पापानि । ॐ शाम्यन्त्वीतयः । ॐ शाम्यन्त्युपद्रवाः । पुनः प्रथमपात्रे -- ॐ शुभानि वर्धन्ताम् । ॐ शिवा आपः सन्तु । ॐ शिवा ऋतवः सन्तु । ॐ शिवा ओषधयः सन्तु । ॐ शिवा अतिथयः सन्तु । ॐ अहोरात्रे शिवे स्याताम् ।

**यजुर्वेद :--**

ॐ निकामे निकामे नः पर्जन्यो व्वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।

6 **ऋग्वेद :--**

ॐ शन्नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु । शन्नो द्यावापृथिवी शं प्रजाभ्यः शन्नो अस्तु द्विपदे शं चतुष्पदे ।

**सामवेद :--**

ॐ त्वष्टा ३.४ । नो दै वियम् । वचाः । पर्जन्यो ब्रह्मणस्या २.३ तीः । पुत्रैर्भ्रातृभिरदिति नूपात् २.३ नाः । दुष्टारा २.३ न्त्रा । मेणं वा २.३. । चा. ३.४.३. ।। उ २.३.४.५. इ । डा. ।।१।।

**अथर्ववेद :--**

ॐ गणास्त्वोपगायन्तु मारुताः पर्जन्योघोषिणः पृथक् । स्वर्गावर्षस्य वर्षतो वर्षन्तु पृथिवीमनु ।।१।।

**यजमान :--**

ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् । ॐ भगवान् पर्जन्यः प्रीयताम् । ॐ भगवान्नारायणः प्रीयताम् । ॐ भगवान् स्वामी महासेनः प्रीयताम् ।

पुरोनुवाक्यया यत्पुण्यं तदस्तु । याज्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु । प्रातः सूर्योदये यत्पुण्यं तदस्तु । एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये । ब्राह्मणाः वाच्यताम् ।

**यजमान :--**

ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनमकारकम् ।
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ।।

भो ब्राह्मणाः । मम सकुटुम्बस्य सपरिवारस्य गृहेऽद्य करिष्यमाणस्यं अमुक कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ।

**ब्राह्मणा :--**

ॐ पुण्याहम्, पुण्याहम्, पुण्याहम् ।
ॐ पुनन्तु मा देवजनाः पुनन्तु मनसाधियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ।। (यजु.)

**यजमान :--**

पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ।

ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ।।

भो ब्राह्मणाः ! मया क्रियमाणस्य अमुककर्मणः कल्याणं भवन्तो ब्रुवन्तु ।

**ब्राह्मणा :--**

ॐ कल्याणम् कल्याणम्, कल्याणम् । ॐ यथेमां व्वाचं कल्याणीमावदानि जनेभ्यः/ब्राह्मराजन्याभ्या ७ शूद्राय चार्याय च स्वाय चारणाय च । प्रियां देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यताम् ।

**यजमान :--**

सागरस्य तु या ऋद्धिर्महालक्ष्मयादिभिः कृता ।

सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ।।

भो ब्राह्मणाः ! मया क्रियमाणस्य अमुक कर्मणःऋद्धिं भवन्तो ब्रुवन्तु ।

**ब्राह्मणा :--**

ॐ कर्म ऋध्यताम् ३ । ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता ऽअभूम । दिवं पृथिव्या ऽत्रध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ।

**यजमानः --**

स्वस्तिस्तु या ऽविनाशाख्या पुण्यकल्याणवृद्धिदा ।

विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ।

भो ब्राह्मणाः ! मया क्रियमाणस्य अमुककर्मणः स्वस्ति भवन्तो ब्रुवन्तु ।

**ब्राह्मणा :--**

ॐ आयुष्मते स्वस्ति ३ । ॐ स्वस्ति न ऽ इन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।।

**यजमान :--**

समुद्रमथनाज्जाता जगदानन्दकारिका ।

हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ।।

भो ब्राह्मणाः ! मया क्रियमाणस्यास्य कर्मणः श्रीरस्तु इति भवन्तो ब्रुवन्तु ।

**ब्राह्मणा :--**

ॐ अस्तु श्रीः ३ ।

ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।

इष्णन्नं निपाणां मुम्मऽइपाण सर्वलोकं मऽइपाण ।।

**यजमान :--**

मृकण्डसूनोरायुर्यद् ध्रुवलोमशयोस्तथा ।

आयुषा तेन संयुक्ता जीवेम शरदः शतम् ।।

**ब्राह्मणा :--**

शतं जीवन्तु भवन्तुः ३ ।

ॐ शतमिन्नुशरदो अन्ति दवा यत्रा नश्चक्रा जरसन्तनूनाम् ।

पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिपतायुर्गन्तोः ।।

**यजमान :--**

शिवगौरीविवाहे या या श्रीरामे नृपात्मजे ।

धनदस्य गृहे या श्रीरसाकं साऽस्तु सद्मनि ।।

**ब्राह्मणा :--**

ॐ अस्तु श्रीः ३ ।

ॐ मनसः काममाकूति व्याचः सत्यमशी यः ।

पशूनां ७७ रूमन्नस्य रसो यशः श्रीः श्रयताम ।

**यजमान :--**

प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट् ।

भगवाञ्छाश्वतो नित्यं नो वै रक्षन्तु सर्वतः ।।

**ब्राह्मणा :--**

ॐ भगवान् प्रजापतिः प्रीयताम् ३ ।

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परितावभूव । यत्कामास्त

जुहुमरत्तन्नो ऽअस्त्वयममुष्य पितासावस्य पिता व्वय ॐ स्याम पतयो रयीणा ॐ स्वाहा ।

**यजमान :--**

आयुष्मते स्वस्तिमते यजमानाय दाशुपे ।
श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः ।।

**ब्राह्मणाः --**

आयुष्मते स्वस्ति ३ ।
ॐ पति पन्थामपद्यहि स्वस्तिगामनेहसम् ।
येन विश्वाः परि द्विषो व्वृणक्ति व्विन्दते व्वसु ।।

**संकल्प :--**

कृतस्य स्वस्तिवाचनकर्मणः समृद्ध्यर्थ स्वस्तिवाचकेभ्यो ब्राह्मणेभ्य इमां दक्षिणां विभज्य दातुमहमुत्सृजे ।

**अभिषेक :--**

एकस्मिन् पात्रे वरुणोदकं गृहीत्वाऽविधुराश्चत्वारो ब्राह्मणाः दूर्वाऽऽम्रपल्लवैः वामभागस्थितां पत्नी सकुटुम्बं यजमानं चाऽभिषिञ्चेयुः ।

(चार अविधुर ब्राह्मण एक पात्र में कलश के जल को लेकर यजमान को और वामभाग में बैठकर यजमान पत्नी को दूर्वा अथवा आम्रपल्लवों से अभिषेक करें ।)

ॐ द्यौ शान्तिरन्तरिक्ष ॶ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्मशान्तिः सर्वे ॶ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।

यतो यतः समीहसे ततो न ऽअभयं कुरु ।
शं नः कुरु प्रजाभ्यो ऽअभयं नः पशुभ्यः ।।

अमृताभिपेकोऽस्तु ।

## षोडषमातृका मण्डलम्

| | | | |
|---|---|---|---|
| आत्मनः कुल देवता १६ | लोकः मातरः १२ | देव सेना ८ | मेधा ४ |
| तुष्टिः १५ | मातरः ११ | जया ७ | शची ३ |
| पुष्टि १४ | स्वाहा १० | विजया ६ | पद्मा २ |
| धृति १३ | स्वधा ९ | सावित्री ५ | गणेश + गौरी १ |

## षोडषमातृका-पूजनम्

पूजक के दाहिने हाथ की ओर लाल वस्त्र पर उपरोक्त चित्र के अनुसार १६ (सोलह) कोष्ठों में गेहूँ अथवा चावल रखकर क्रम से बनाये गये मातृका मण्डल पर पश्चिम से पूर्व की ओर मातृकाओं का आवाहन नीचे लिखे नाम मन्त्रों से कर उन्हें विराजमान करें ।

**गणेशम् --**

ॐ गणानां त्वा गणपति ७ हवामहे प्रियाणां त्वा प्रियपति ७ हवामहे निधीनां त्वा निधिपति ७ हवामहे व्वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् । ॐ भूर्भुवः स्वः गणपतये नमः, गणपतिमावाहयामि स्थापयामि । (प्रथम अक्षत-पुञ्ज पर गणेश के लिए पुष्पाक्षत छोड़ें ।)

**गौरीम् --**

ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ।

हेमाद्रितनयां देवी वरदां शङ्करप्रियाम् ।

लम्बोदरस्य जननीं गौरीमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि ।

(द्वितीय अक्षत-पुञ्ज पर गौरी के लिए पुष्पाक्षत छोड़ें ।)

**पद्माम् --**

ॐ हिरण्यरूपा ऽउपसो व्विरोक ऽउभाविन्दा ऽ उदिथः सूर्य्यश्च। आरोहतं व्वरुण मित्र गर्त ततश्चक्षाथामदितिं दितिञ्च मित्रोऽसिव्वरुणोऽसि ।

पद्मभां पद्मवदनां पद्मनाभोरुसंस्थिताम् ।
जगत्प्रियां पद्मवासां पद्मामावाहयाम्यहम् ।।

ॐ पद्मायै नमः, पद्मामावाहयामि स्थापयामि ।

(तृतीय कोष्टक में पद्मा के लिए पुष्पाक्षत छोड़ें ।)

**शचीम् --**

ॐ निवेशनः सङ्गमनो व्वसूनां व्विश्वा रूपाभिचप्ष्टे शचीभिः ।
देवऽइव सविता सत्यधर्म्मेन्द्रो न तस्थौ समरे पथीनाम् ।।

दिव्यरूपां विशालाक्षीं शुचि-कुण्डल-धारिणीम्।
रक्तामुक्ताद्यलङ्कारां शचीमावाहयाम्यहम् ।।

ॐ शच्चै नमः, शाचीमावाहयामि स्थापयामि ।

(चतुर्थ कोष्टक में शची के लिए पुष्पाक्षत छोड़ें ।)

**मेधाम् -**

मेधां में व्वरुणो ददातु मेधामग्निः प्रजापतिः । मेधामिन्द्रश्शच व्वायुश्शच मेधां धाता ददातु मे स्वाहा ।

विश्वेऽस्मिन् भूरिवरदां जरां निर्जरसेविताम् ।
बुद्धिप्रवोधिनीं सौम्यां मेधामावाहयाम्यहम् ।।

ॐ मेधायै नमः, मेघामावाहयामि स्थापयामि ।

(पाँचवे अक्षत-पुञ्ज पर मेधा के लिए पुष्पाक्षत छोड़ें ।)

**सावित्रीम् --**

ॐ सविता त्त्वा सवाना ꣳ सुवतामाग्नग् हपतीना ꣳ सोमो व्वनस्पतीनाम् । वृहस्प्पतिर्व्वाच ऽइन्द्रो ज्ज्यैष्ठ्ठयायरुद्द्रः पशुब्भ्यो मित्रः सत्त्यो व्वरुणो धर्मपतीनाम् ।

जगत्सृष्टिकरी धात्री देवी प्रणवमातृकाम् ।
वेदगर्भां यज्ञमयीं सावित्रीं स्थापयाम्यहम् ।।

ॐ सावित्र्यै नमः, सावित्रीमावाहयामि स्थापयामि ।

(छठे अछत-पुञ्ज पर सावित्री के लिए पुष्पाक्षत छोड़ें ।)

**विजयाम् --**

ॐ विज्ज्यन्धनुः कदर्पिनो व्विशल्यो वाणावाँ २ ।। उत । अनेशन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ।।

सर्वास्त्रधारिणीं देवीं सर्वाभरणभूषिताम् ।
सर्वदेवस्तुतां वन्द्यां विजयां स्थापयाम्यहम् ।।

ॐ विजयायै नमः, विजयामावाहयामि स्थापयामि ।

(सातवें अक्षत-पुञ्ज पर विजया के लिए पुष्पाक्षत छोड़ें ।)

**जयाम् --**

ॐ वह्वीनां पिता वहुरस्य पुत्रश्शिचश्श्चाकृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्श्च सर्वाः पृष्ठ्ठे निनिद्धो जयति प्रसूतः ।

सुरारिमथिनी देवी देवानामभयप्रदाम् ।
त्रैलोक्यवन्दितां शुभ्रां जयामावाहयाम्यहम् ।।

ॐ जयायै नमः, जयामावाहयामि स्थापयामि ।

(आठवें पुञ्ज पर जया के स्थापनार्थ अक्षत छोड़ें ।)

**देवसेनाम् -**

ॐ इन्द्र ऽआसां नेता वृहस्पतिर्द्दक्षिणा यज्ञः पुर एतु सोमः देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ।

मयूरवाहनां देवीं खड्ग-शक्ति-धनुर्धराम् ।
आवाहयेद् देवसेनां तारकासुरमर्दिनीम् ।।

ॐ देवसेनायै नमः, देवसेनामावाहयामि स्थापयामि ।

(नवें अक्षत-पुञ्ज पर देवसेना के लिए अक्षत छोड़ें ।)

**स्वधाम् --**

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन्नितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः, पितर शुन्धद्ध्वम् ।

अग्रजा सर्वदेवानां कव्यार्थ या प्रतिष्ठिता ।
पितृणां तृप्तिदां देवी स्वधामावाहयाम्यहम् ।।

ॐ स्वधायै नमः, स्वधामावाहयामि स्थापयामि ।

(दसवें पुञ्ज पर स्वधा के निमित्त पुष्पाक्षत छोड़ें ।)

**स्वाहाम् --**

ॐ स्वाहा प्राणेभ्यः साधिपंतिकेभ्यः । पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा ब्बायवे स्वाहा । दिवे स्वाहा सूर्य्याय स्वाहा ।

हविर्गृवा सततं देवेभ्यो या प्रयच्छति ।
तां दिव्यरूपां वरदां स्वाहामावाहयाम्यहम् ।।

ॐ स्वाहायै नमः, स्वाहामावाहयामि स्थापयामि ।

(ग्यारहवें पुञ्ज पर स्वाहा के निमित्त पुष्पाक्षत छोड़ें ।)

**मातृ :--**

ॐ आपोऽअस्म्मान्मातरः शुन्धयन्तु घृतेन तो घृतप्प्वः पुनन्तु । व्विश्श्व ७ हि रिप्प्रं प्रवहन्ति देवीरुदिदाब्भ्यः शुचिरा पूतऽएमि । दीक्षातपसोस्तनूरसि तां त्वा शिवा ७ शम्मां परिदधे भद्द्रं व्वर्ण पुष्य्यन् ।

आवाहयाम्यहं मातृः सकलाः लोकपूजिताः ।
सर्वकल्याण रूपिण्यो वरदा दिव्यभूषणाः ।

ॐ मातृभ्यो नमः, मातृः आवाहयामि स्थापयामि ।

(बारहवें अक्षत-पुञ्ज पर मातृ के निमित्त पुष्पाक्षत छोड़ें ।)

**लोकमातृ :--**

ॐ रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे व्विभु च मे प्रभु च मे पूण्णं च मे पूर्ण्णतरं च मे कुयवं च मऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ।

आवांहयेल्लोकमातृ, जयन्तीप्रमुखाः शुभाः ।
नानाऽभीष्टप्रदाः शान्ताः सर्वलोकहितावहाः ।।

ॐ लोकमातृभ्यो नमः, लोकमातृ, आवाहयामि स्थापयामि ।

(तेरहवें अक्षत-पुञ्ज पर लोक मातृ के लिए अक्षत छोड़ें ।)

**धृतिम् --**

ॐ यत्प्रज्ञानमुत चेतो धृतिश्च्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्नऋते किञ्च न कर्म्म क्रियतं तन्मे मनः शिवसंकल्प्पमस्तु ।

सर्वहर्षकरी देवी भक्तानाममयाप्रदाम् ।
हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्यहम् ।।

ॐ धृत्यै नमः, धृतिमावाहयामि स्थापयामि ।

(चौदहवें अक्षत-पुञ्ज पर धृति के लिए पुष्पाक्षत छोड़ें ।)

## पुष्टिम् --

ॐ अङ्गान्यात्मन्निभिषजा तदश्विनात्मानमङ्गैः समधात्त्सरस्वती । इन्द्रस्य रूप ७ शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः ।

पोपयन्तीं जगत्सर्वं स्वदेहप्रभवैर्नवैः ।
शाकैः फलैर्जलैरत्नैः पुष्टिमावाहयाम्यहम् ।।
ॐ पुष्ट्यै नमः, पुष्टिमावाहयामिं स्थापयामि ।

(पन्द्रहवें अक्षत-पुञ्ज पर पुष्टि देवी के लिए पुष्पाक्षत छोड़ें ।)

## तुष्टिम् --

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । सनः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ।

देवैराराधितां देवीं सदा सन्तोपकारिणीम् ।
प्रसादसुमुखीं देवीं . तुष्टिमावाहयाम्यहम् ।।
ॐ तुष्ट्यै नमः, तुष्टिमावाहयामि, स्थापयामि ।

(सोलहवें पुञ्ज पर तुष्टि के लिए पुष्पाक्षत छोड़ें ।)

## आत्मनः कुलदेवताम् --

ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा । चक्षुषे स्वाहा क्षोत्राय स्वाहा व्वाचे स्वाहा मनसे स्वाहा ।

पत्तने नगरे ग्रामे विपिने पर्वते गृहे ।
नानाजातिकुलेशानी दुर्गामावाहयाम्यहम् ।।

ॐ आत्मनः कुलदेवतायै नमः, आत्मनः कुलदेवतामावाहयामि, स्थापयामि ।

(सतरहवें अक्षत-समूह पर अपनी कुलदेवी के लिए पुष्पाक्षत छोड़ें ।)

## प्राणप्रतिष्ठा --

ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमं तनोत्वरिष्ट्टं यज्ञ ७ समिमं दधातु । व्विश्वे देवास ऽइह मादयन्तामों ३। प्रतिष्ठ ।

ॐ भूर्भुवः स्वः गणपतिसहिताः श्रीगौर्यादिषोडशमातरः सुप्रतिष्ठिता वरदा भवत । श्रीसूक्तेन षोडशोपचारैः सम्पूज्य, प्रार्थयेत् --

आयुरारोग्यमैश्वर्यं ददध्वं मातरो मम ।
निर्विघ्नं सर्वकार्येषु कुरुध्वं सगणाधिपाः ।।

(इति नारिकेलादिफलं समर्पयेत्)

**पुष्पाञ्जलिः --**

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।।
धृतिः पुष्टिस्तथा तुष्टिः आत्मनः कुलदेवताः ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ।।
हरात्मज चतुर्बाहोवारणास्य महोदर ।
प्रसन्नो भव मत्स्यं त्वं गौरीपुत्र नमोऽस्तु ते ।।
ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लालया,
कौमारी रिपुदर्प्पनाशनकरी चक्रायुधा वैष्णवी ।
वाराही घनघोरघर्घरमुखी चैन्द्री च वज्रायुधा,
चामुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ।।

मुखे ते ताम्बूलं नयनयुगले कज्जलकला, ललाटे काश्मीरं विलसति गले मौक्तिकलता । स्फुरत्कांची शाटी पृथुकटितटे हाटकमयी, भजामिस्त्वां गौरीं नगपतिकिशोरीम विरतम् ।। (पुष्पाञ्जलि अर्पण करे ।)

अनया पूजया गणेशसहित-गौर्यादिषोडशमातरः प्रीयन्तां न मम ।

(जल छोड़ें ।)

"सप्तधृतमातृकाचित्रम्"

श्रीः

卐

श्री -- लक्ष्मी -- धृति -- मेधा -- स्वाहा -- प्रज्ञा -- सरस्वती

## सप्तधृतमातृका-पूजनम्

श्रीर्लक्ष्मीर्धृतिमेधा स्वाहा प्रज्ञा सरस्वती ।
माङ्गल्येपु प्रपूज्यन्ते सप्तैता घृतमातरः ।।

श्वेत वस्त्र से आच्छादित पीठ (पाटा) पर श्री लिखें तथा नीचे सिंदूर अथवा रोली से क्रमशः सममानता में एक के नीचे दो उसके नीचे तीन ऐसे ही सात विन्दु वना लें । इसके बाद उन पर मन्त्र पढ़ते हुए सातों बिन्दुओं पर घी की धारा दें तथा अन्त में उन अन्तिम विन्दुओं को गुड़ से मिलाकर उनकी अलग-अलग पूजा करें ।

श्रियम् -- ॐ मनसः कामामाकूतिं व्वाचः सत्यमशीमहि ।
पशूनां ᳪ रूपमन्नस्य मयि श्रीः श्रयतां यशः ।
ॐ श्रियै नमः श्रियमावाहयामि स्थापयामि ।।

( पहली बिन्दु पर अक्षत छोड़कर 'श्री' का आवाहन करें ।)

**लक्ष्मीम् --**

ॐ श्रीश्ञ्च ते लक्ष्मीश्ञ्च पत्न्यावहोरात्रे पाश्‍र्श्वे नक्षत्राणि रूपमश्‍श्विनौ व्यात्तम् । इष्णन्निषाणामुं मऽइषाण सर्व्वलोकं म ऽइषाण ।

ॐ लक्ष्म्यै नमः, लक्ष्मीमावाहयामि स्थापयामि ।

(दूसरी विन्दु पर अक्षत छोड़कर लक्ष्मी का अ।  न करें ।)

**धृतिम् --**

ॐ भद्रं कर्ण्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्य्यजत्राः ।
स्थिरैरङ्गैस्तुष्ट्टुवा ७ सस्तनूभिर्व्व्यशेमहि देवहितं व्यदायुः ।।
ॐ धृत्यै नमः, धृतिमावाहयामि स्थापयामि ।

(तीसरी विन्दु पर अक्षत छोड़कर धृति का आवाहन करें ।)

**मेधाम् --**

ॐ मेधां मे व्वरुणो ददातु मेधामग्निः प्प्रजापतिः ।
मेधामिन्द्रश्ञ्च व्वायुश्च मेधां धाता दधातु मे ।
ॐ मेधायै नमः, मेधामावाहयामि स्थापयामि ।

(चौथी रेखा पर चावल छोड़कर मेधा का आवाहन करें ।)

**स्वाहाम् --**

ॐ प्राणाय स्वाहा अपानाय स्वाहा व्यानाय स्वाहा चक्षुपे स्वाहा श्रोत्राय स्वाहा व्वाचे स्वाहा मनसे स्वाहा ।

ॐ स्वाहायै नमः, स्वाहामावाहयामि स्थापयामि ।

(पाँचवी बिन्दु रेखा पर चावल छोड़कर स्वाहा का आवाहन करें ।)

**प्रज्ञाम् --**

ॐ आयं गौः पृश्निरक्कमीदसदन्मातरं पुरः । पितरं च प्प्रयन्त्स्वः ।
ॐ प्रज्ञायै नमः प्रज्ञामावाहयामि स्थापयामि ।

(छठीं विन्दु रेखा पर अक्षत छोड़कर प्रज्ञा का आवाहन करें ।)

**सरस्वतीम् --**

ॐ पावका नः सरस्वती व्वाजेभिर्व्वाजिनीवति । यज्ञं व्वष्टुधियावसुः ।

ॐ सरस्वत्यै नमः, सरस्वतीमावाहयामि स्थापयामि ।

(सातवीं बिन्दु रेखा पर अक्षत छोड़कर सरस्वती का आवाहन करें ।)

## वसोर्धाराः कर्तव्या :--

ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वा ।

## गुडेनैकीकरणम् --

ॐ कामधुक्षः ।

## प्राण-प्रतिष्ठा --

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ७ समिमं दधातु । विश्वे देवा स इह मादयन्तामो ३ प्रतिष्ठ ।

वसोर्धारा देवताः सुप्रतिष्ठिताः वरदाः भवन्तु ।।

(इस मन्त्र से प्राण-प्रतिष्ठा कर षोडशोपचार पूजन करें ।)

श्रीसूक्तेन षोडशोपचारैः सम्पूज्य प्रार्थयेत् ।

## प्रार्थना --

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी,
गम्भीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
या लक्ष्मीर्दिव्यरूपैर्मणिगणखचितैः स्नापिता हेमकुम्भैः,
सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ।।
यदङ्गत्वेन भो देव्यः ! पूजिता विधिमार्गतः ।
कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ।।
या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वम् ।।
अनया पूजया श्रियादिसप्तघृतमातरः प्रीयन्ताम् न मम ।

卐

## नवग्रहमण्डलचित्रम्

## "नवाग्रहादिदेवानाम् पूजनम्"

ईशान्यां चतुस्त्रिंशदङ्गुलोञ्चसमचतुरस्त्रस्य ग्रहपीठस्य समीपे सपत्नीको यजमानः उपविश्य आचमनं प्राणायामञ्च कुर्यात् । ततो हस्ते जलं गृहीत्वा मया प्रारब्धस्य अमुककर्मणः साङ्गता सिद्ध्यर्थम् अस्मिन् नवग्रहपीठे अधिदेवताग्रत्यधिदेवतापञ्चलोकपालवास्तुक्षेत्रपालदशदक्पालदेवतासहितानाम् आदित्यादिनवग्रहाणाम् तत्तन्मण्डले स्थापनप्रतिष्ठा पूजनानि करिष्ये । इति संकल्प्य । वामहस्ते अक्षतान् गृहीत्वा दक्षहस्तेन तत्तस्थाने आदित्यादिदेवतानाम् आवाहनं कुर्यात् ।

(वायें हाथ में अक्षत लेकर दाहिने हाथ से प्रत्येक मन्त्र के वाद रेखाङ्कितग्रहों के स्थान पर अक्षत छोड़ें ।)

सूर्यम् (मण्डल के मध्य में) - ॐ आकृष्णेनरजसा व्वर्त्तमानो निवेशयन्नमृतं मर्त्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनाति पश्यन् ।

(यजु० ३३ । ४३)

जपा-कुसुम-संकाशं काश्यपेथं महाद्युतिम् ।
तमोऽरिं सर्वपापघ्नं सूर्यमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः कलिङ्गदेशोद्‌भव काश्यपसगोत्र रक्तवर्ण भो सूर्य ! इहागच्छ इह तिष्ठ, सूर्याय नमः, सूर्यमावाहयामि स्थापयामि ।

चन्द्रम् (अग्निकोण में) -- ॐ इमं देवा ऽअसपत्न ७ सुवध्वं महते क्षत्राय महते ज्येष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इममपुष्य पुत्रमपुष्यै पुत्रमस्यै विश ऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां ७ राजा । (यजु० ९ । ४०)

दधि-शंख-तुषाराभं क्षीरोदार्णवसम्भवम् ।
ज्योत्स्नापतिं निशानाथं सोममावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः यमुनातीरोद्‌भव आत्रेयसगोत्र शुक्लवर्ण भो सोम ! इहा गच्छ इह तिष्ठ, सोमाय नमः सोममावाहयामि स्थापयामि ।

भौमम् (दक्षिण में) -- ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽअयम् । अपा ७ रेता ७ सि जिन्वति । (यजु० ३ । १२)

धरणीगर्भसम्भूतं विद्युत्तेजसम-प्रभम् ।
कुमारं शक्तिहस्तं च भौममावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः अवन्तिकापुरोद्‌भव भरद्वाजसगोत्र रक्तवर्ण भो भौम ! इहागच्छ इह तिष्ठ भौमाय नमः, भौममावाहयामि स्थापयामि ।

बुधम् (ईशान कोण में) -- ॐ उद्‌बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते स ७ सृजेथा मयं च । अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत । (यजु० १५ । ५७)

प्रियङ्गुकलिकाभासं रूपेणाऽप्रतिमं बुधम् ।
सौम्यं सौम्यगुणोपेतं बुधमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः मगधदेशोद्‌भव आत्रेयसगोत्र हरितवर्ण भो बुध ! इहागच्छ, इहतिष्ठ बुधायनमः, बुधमावाहयामि स्थापयामि ।

वृहस्पतिम् (उत्तर में) -- ॐ वृहस्पते ऽअति यदर्यो ऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ।

देवानां च मुनीनां च गुरु काञ्चनसंनिभम् ।
वन्द्यभूतं त्रिलोकानां गुरुमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः सिन्धुदेशोद्भव आङ्गिरसगोत्र पीतवर्ण भो बृहस्पते ! इहागच्छ इहतिष्ठ बृहस्पतये नमः, बृहस्पतिमावाहयामि स्थापयामि ।

शुक्रम् (पूर्व. में) -- ॐ अन्नात्परिस्त्रुतो रसं ब्रह्मणा व्यपिवत्क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्त्यमिन्द्रियं व्विपान ७ शुक्कमन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।।

हिमकुन्द - मृणालाभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रवक्तारं शुक्रमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्लवर्ण भो शुक्र इहागच्छ इह तिष्ठ शुक्राय नमः, शुक्रमावाहयामि स्थापयामि ।

शनिम् (पश्चिम में) -- ॐ शं नो देवीरभिष्टय ऽआपो भवन्तु पीतये । शंय्योरभिस्त्रवन्तु नः ।।

नीलाम्बुजसमाभासं रविपुत्रं यमाग्रजम् ।
छाया मार्तण्डसम्भूतं शनिमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र कृष्णवर्ण भो शनैश्चर ! इहागच्छ इहतिष्ठ शनैश्चरमावाहयामि स्थापयामि ।।

राहुम् (नैर्ऋत्य कोण में) -- ॐ कया नश्चित्र ऽआभुवदूती सदावृधः सखा । कया शचिष्ठ्ठया व्वृता ।।

अर्द्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ।
सिंहिकागर्भसम्भूतं राहुमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः राठिनापुरोद्भव पैठिनसगोत्र कृष्णवर्ण भो राहो ! इहा गच्छ इह तिष्ठ राहवे नमः, राहुमावाहयामि स्थापयामि ।

केतुम् (वायव्य कोण में) -- ॐ केतुं कृण्ण्वन्नकेतवे पेशो मर्य्या ऽअपेशसे । समुषद्द्भिरजायथाः ।।

पलाशधूम्रसंकाशं तारकाग्रहमस्तकम् ।
रौद्रं रौद्रात्मकं घोरं केतुमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः अन्तर्वेदिसमुद्भव जैमिनिसगोत्र कृष्णवर्ण भो केतो ! इहागच्छ इह तिष्ठ केतवे नमः, केतुमावाहयामि स्थापयामि ।।

# अधिदेवतानां स्थापनम्

शिवः शिवा गुहो विष्णुर्ब्रह्मेन्द्रयमकालकाः ।

चित्रगुप्तोऽथ भान्वादिदक्षिणे चाऽधिदेवताः ।।

(विशेष पूजा, यज्ञ, अनुष्ठान इत्यादि में नवग्रहों की स्थपाना करने के उपरान्त सूर्य आदि ग्रहों के दाहिने भाग में नीचे लिखे क्रमानुसार अधिदेवताओं की स्थपना अधोलिखित मंत्र से दाहिने हाथ से ग्रहमण्डल के दक्षिण पार्श्व में अक्षत छोड़ते हुए करें ।)

ईश्वरम् -- ॐ त्र्यम्वकं य्यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव वन्धनान्मृत्त्योर्मुक्षीय माऽमृतात् ।।

पञ्चवक्त्रं वृषारूढमुमेशं च त्रिलोचनम् ।

आवाहयामीश्वरं तं खट्वाङ्गवरधारिणम् ।।

ॐ भूर्भुवः स्वः ईश्वर इहागच्छ इह तिष्ठ ईश्वराय नमः, ईश्वरमावाहयामि स्थापयामि । (सूर्य के दायें भाग में)

उमाम् -- ॐ श्रीश्श्च ते लक्ष्मीश्श्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकं म ऽइषाण ।।

हेमाद्रितनयां देवीं वरदां शंकरप्रियाम् ।

लम्वोदरस्य जननीमुमामावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः उमे इहागच्छ इह तिष्ठ उमायै नमः, उमामावाहयामि स्थापयामि । (चन्द्रमा के दायें भाग में)

स्कन्दम् -- ॐ यदक्रन्दः प्रथमं जायमान ऽउद्यन्त्समुद्राद्रुत वा पुरीपात् । श्येनस्य पक्षा हरिणस्य वा ऽ उपस्तुत्यं महि जातन्ते ऽअर्व्वन् ।

रुद्रतेजः समुत्पन्नं देवसेनाग्रगं विभुम् ।

षण्मुखं कृत्तिकासूनुं स्कन्दमावाहयाम्यहम् ।।

(मंगल के दायें भाग में ।)

ॐ भूर्भुवः स्वः स्कन्देहागच्छ इह तिष्ठ स्कन्दाय नमः, स्कन्दमावाहयामि स्थापयामि ।

विष्णुम् -- ॐ व्विष्णो रराटमसि व्विष्णोः श्नप्त्रे स्थो व्विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि । व्वैष्णवमसि व्विष्णवे त्त्वा ।

देवदेवं जगन्नाथं भक्तानुग्रहकारकम् ।
चतुर्भुजं रमानाथं विष्णुमावाहयाम्यहम् ।।

(बुध के दायें भाग में)

ॐ भूर्भुवः स्वः विष्णो इहागच्छ इह तिष्ठ विष्णवे नमः, विष्णुमावाहयामि स्थापयामि ।

ब्रह्माणम् -- ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मव्वर्च्चसी जायतामा राष्ट्रे राजन्य शूर ऽइषव्योतिव्याधी महारथोः जायतांदोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्य्योषा जिष्णू रथेष्ठ् सभेयो युवाऽस्य यजमानस्य वीरो जायतांनिकामे निकामे नः पर्यन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।

कृष्णाजिनाऽम्बरधरं पद्मसंस्थं चतुर्मुखम् ।
वेदाधारं निरालम्बं विधिमावाहयाम्यहम् ।।

(वृहस्पति के दायें भाग)

ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छ इहतिष्ठ ब्रह्मणेनमः । ब्रह्माणमावाहयामि स्थापयामि ।

**इन्द्रम् --**

ॐ सयोषाऽइन्द्र सगणो मरुद्भिः सोमं पिब व्वृत्रहा शूर व्विद्वान् । जहिशत्रूँ २।। रप मृधो नुदस्वाथाभयं कृणुहि व्विश्वतो नः ।

देवराजं गजारूढं शुनासीरं शतक्रतुम् ।
वज्रहस्तं महाबाहुमिन्द्रमावाहयाम्यहम् ।।

(शुक्र के दायें भाग में)

ॐ भूर्भुवः स्वः इन्द्रेहागच्छ इहतिष्ठ इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि ।

**यमम् --**

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा धर्माय स्वाहा धर्मः पित्रे ।

धर्मराजं महावीर्यं दक्षिणादिक्पतिं प्रभुम् ।
रक्तेक्षणं महाबाहुं यममावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः यम इहागच्छ इह तिष्ठ यमाय नमः, यममावाहयामि स्थापयामि । (शनि के दायें भाग में ।)

**कालम् --**

ॐ कार्षिरसि समुद्रस्य त्वाक्षित्या ऽउन्नयामि । समापोऽअद्भिरग्मत समोषधीभिरोषधीः ।

अनाकारमनन्ताख्यं वर्तमानं दिने दिने ।
कलाकाष्ठादिरूपेण कालमावाहयाम्यहम् ।।

(राहु के दायें भाग में)

ॐ भूर्भुवः स्वः कालेहागच्छ इह तिष्ठ कालाय नमः, कालमावाहयामि स्थापयामि ।

**चित्रगुप्तम् --**

ॐ चित्रावसो स्वस्ति तो पारमशीय ।

धर्मराजसभासंस्थं कृताऽकृत-विवेकिनम् ।
आवाहयेचित्रगुप्तं लेखनीपत्रहस्तकम् ।।

ॐ भूर्भुवः स्वः चित्रगुप्तेहागच्छ इह तिष्ठ चित्रगुप्ताय नमः, चित्रगुप्तमावाहयामि स्थापयामि । (केतु के दायें भाग में)

# प्रत्यधिदेवतास्थापनम्

अग्निरापो धरा विष्णुः शक्रेन्द्राणी पितामहाः ।
पन्नागाकः क्रमाद्वामे ग्रहप्रत्यधिदेवताः ।।

(नवग्रह मण्डल पर अधिदेवताओं की स्थापना के उपरान्त नवग्रहों के बायें भाग में निम्न प्रत्येक मन्त्र उच्चारण करते हुए दाहिने हाथ से क्रमानुसार चावल छोड़ते हुए प्रत्यधिदेवताओं का आवाहन एवं स्थापन करें ।)

**अग्निम् --**

ॐ अग्निं दूतं पुरो दधे हव्व्यवाहमुप व्व्रुवे । देवाँ२ ऽआसादयादिह ।।

रक्तमाल्याम्बरधरं रक्तपद्मासन-स्थितम् ।

वरदाभयदं देवमग्निमावाहयाम्यहम् ॥

(सूर्य के वायें भाग में)

ॐ भूर्भुवः स्वः अग्ने इहागच्छ इह तिष्ठ अग्नये नमः, अग्निमावाहयामि, स्थापयामि ॥

**अपः --**

ॐ आपो हिष्ठा मयोभुवस्ता न ऽऊर्ज्जेदधातन । महेरणाय चक्षसे ।

आदिदेवसमुद्भूता जगच्छुद्धिकराः शुभाः ।

ओषध्याप्यायनकरा अपामावाहयाम्यहम् ॥

(चन्द्रमा के वायें भाग में)

ॐ भूर्भुवः स्वः अप इहाऽऽगच्छत इह तिष्ठत अद्भ्यो नमः अप आवाहयामि स्थापयामि ।

**पृथिवीम् --**

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनि । यच्छा नः शर्म्म सप्रथाः ।

शुक्लवर्णां विशालाक्षीं कूर्मपीष्ठोपरिस्थिताम् ।

सर्वशस्याश्रयां देवीं धरामावाहयाम्यहम् ॥

(मंगल के वायें भाग में)

ॐ भूर्भुवः स्वः पृथिवि इहागच्छ इह तिष्ठ पृथिव्यै नमः, पृथिवीमावाहयामि स्थापयामि ।

**विष्णुम् --**

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा ꣳ सुरे स्वाहा ।

शंख - चक्र - गदापद्महस्तं गरुडवाहनम् ।

किरीट - कुण्डलधरं विष्णुमावाहयाम्यहम् ॥

(बुध के बायें भाग में)

**इन्द्रम् --**

ॐ इन्द्र ऽआसां नेता बृहस्पतिर्द्दक्षिणा यज्ञः पुरऽएतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ।

ऐरावतगजारूढं सहस्राक्षं शचीपतिम् ।

वज्रहस्तं सुराधीशमिन्द्रमावाहयाम्यहम् ॥

ॐ भूर्भुवः स्वः इन्द्रेहागच्छ इह तिष्ठ इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि । (वृहस्पति के बायें भाग में)

## इन्द्राणीम् --

ॐ आदित्यै रास्नासीन्द्राण्ण्यां ऽउष्णीषः । पूषासि धर्म्माय दीष्व्वः ।

प्रसन्नवदनां देवीं देवराजस्य वल्लभाम् ।

नाना ऽलङ्कारसंयुक्तां शचीमावाहयाम्यहम् ॥

ॐ भूर्भुवः स्वः इन्द्राणि इहागच्छेह तिष्ठ इन्द्राण्यै नमः, इन्द्राणीमावाहयामि स्थापयामि । (शुक्र के बायें भाग में)

## प्रजापतिम् --

ॐ प्रजापते न त्वदेतान्यन्यो व्विश्वा रूपाणि परिता वभूव । यत्कामास्ते जुहुमस्तन्नो ऽअस्तु व्वय ᳪ स्याम पतयो रयीणाम् ।

आवाहयाम्यहं देवदेवेशं च प्रजापतिम् ।

अनेकव्रतकर्तारं सर्वेषां च पितामहम् ॥

ॐ भूर्भुवः स्वः प्रजापते इहागच्छ इह तिष्ठ प्रजापतये नमः, प्रजापतिमावाहयामि स्थापयामि । (शनि के बायें भाग में)

## पन्नगान् --

ॐ नमोऽस्तु सर्पेब्भ्यो ये के च पृथिवीमनु । ये ऽ अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।

अनन्ताद्यान् महाकायान् नानामणिविराजितान् ।

आवाहयाम्यहं सर्पान् फणासप्तकमण्डितान् ॥

ॐ भूर्भुवः स्वः सर्पा इहागच्छत इह तिष्ठत सर्पेभ्यो नमः सर्पानावाहयामि स्थापयामि । (राहु के बायें भाग में)

## ब्रह्माणम् --

ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो व्वेनऽआवः । स बुध्न्या ऽउपमा ऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः ।

हंसपृष्ठसमारूढं देवतागणपूजितम् ।
आवाहयाम्यहं देवं ब्रह्माणं कमलासनम् ।।

ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छह तिष्ठ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि । (केतु के बायें भाग में)

# पञ्चलोकपालपूजनम्

## गणपतिम् --

ॐ गणानां त्वा गणपति ᳪ हवामहे प्रियाणां त्वा प्रियपति ᳪ हवामहे निधीनां त्वा निधिपति ᳪ हवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ।

लम्बोदरं महाकायं गजवक्त्रं चतुर्भुजम् ।
आवाहयाम्यहं देवं गणेशं सिद्धिदायकम् ।।

(राहोरुत्तरे)

ॐ भूर्भुवः स्व; गणपते इहागच्छेह तिष्ठ गणपतये नमः, गणपतिमावाहयामि स्थापयामि ।

## दुर्गाम् --

(शनेरुत्तरे) ॐ अम्बे ऽअम्बिकेऽम्बालिके न मा नयत्ति कश्चन । ससस्त्यश्वकः सुभद्रिकाँ काम्पीलवासिनीम् ।

पत्तने नगरे ग्रामे विपिने पर्वते गृहे ।
नानाजातिकुलेशानीं दुर्गामावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः दुर्गे इहागच्छेह तिष्ठ दुर्गायै नमः, दुर्गामावाहयाभि स्थापयामि ।

## वायुम् --

(रवेरुत्तरपार्श्वे) ॐ व्यायो ये ते सहस्त्रिणो रथासस्तेभिरागहि । निवुत्त्वान्सोमपीतये ।

आवाहयाम्यहं वायुं भूतानां देहधारिणम् ।
सर्वाधारं महावेगं मृगवाहनमीश्वरम् ।।

ॐ भूर्भुवः स्वः वायो इहागच्छेह तिष्ठ वायवे नमः, वायुमावाहयामि स्थापयामि ।

**आकाशम् --**

(राहोर्दक्षिणे) ॐ घृतं घृतपावानः पिवत व्वसां व्वसापावानः पिवतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिशऽआदिशो व्विदिश ऽउद्दिशं दिग्भ्यः स्वाहा ।

अनाकारं शव्दगुणं द्यावाभूम्यन्तरस्थितम् ।
आवाहयाम्यहं देवमाकाशं सर्वगं शुभम् ॥

ॐ भूर्भुवः स्वः आकाश इहागच्छेह तिष्ठ आकाशाय नमः, आकाशमावाहयामि स्थापयामि ।

**अश्विनौ --**

(केतुदक्षिणे) ॐ या वां कशा मधुमत्यश्विना सूनृतावती । तथा यज्ञं मिमिक्षतम् ।

देवतानां च भैपज्ये सुकुमारौ भिषग्वरौ ।
आवाहयाम्यहं देवावश्विनौ पुष्टिवर्द्धनौ ॥

ॐ भूर्भुवः स्वः अश्विनौ इहागच्छतां इह तिष्ठताम्, अश्विभ्यां नमः, अश्विनौ आवाहयामि स्थापयामि ।

## वास्तोष्पतेः क्षेत्राधिपतेर्दशदिक्पालानाम् च पूजनम्

**वास्तोष्पतिम् --**

(गुरूत्तरे) ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो ऽ अनमीवो भवानः । यत्त्वेमहे प्रतितन्नो जुपस्व शन्नो भव द्विपदे शं चतुष्पदे ।

वास्तोष्पतिं विदिक्कार्यं भूशय्याभिरतं प्रभुम् ।
आवाहयाम्यहं देवं सर्वकर्मफलप्रदम् ॥

ॐ भूर्भुवः स्वः वास्तोष्पते इहागच्छेह तिष्ठ वास्तोष्पतये नमः, वास्तोष्पतिमावाहयामि स्थापयामि ।

**क्षेत्राधिपनिम् --**

(गुरोरुत्तरे) ॐ न हि स्प्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः । एमेनमवृधन्नमृता ऽ अमर्त्यं व्वैश्वानरं क्षैत्रजित्त्याय देवाः ।

ॐ भूर्भुवः स्वः क्षेत्रधिपतये नमः, क्षेत्राधिपतिमावा० स्थाप० ।

**इन्द्रम् --**

(मण्डलाद्बहिः पूर्वस्याम्) ॐ त्रातारमिन्द्रमवितारमिन्द्र ᳮ हवे हवे सुहव ᳮ शूरमिन्द्रम् । ह्वयामि शक्क्रं पुरुहूतमिन्द्र ᳮ स्वस्ति नो मघवा धात्विन्द्रः ।

इन्द्रं सुरपतिं श्रेष्ठं वज्रहस्तं महाबलम् ।
आवाहये यज्ञसिद्ध्यै शतयज्ञाधिपं प्रभुम् ।।

ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि ।

**अग्निम् --**

(मण्डलाद्बहिः आग्नेय्याम्) ॐ त्व न्नो अग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्वश्श्च व्वन्द्य । त्राता तोकस्य तनये गवामस्यनिमेष ᳮ रक्षमाणस्तवव्व्रते ।

त्रिपादं सप्तहस्तं च द्विमूर्द्धानं द्विनासिकम् ।
षण्नेत्रं च चतुः श्रोत्रमग्निमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः अग्ने इहागच्छेह तिष्ठ अग्नये नमः, अग्निमा० स्थाप० ।

**यमम् --**

(मण्डलाद्बहिः दक्षिणस्याम्) ॐ यमाय त्त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्म्माय स्वाहा धर्म्मः पित्रे ।

महामहिषमारूढं दण्डहस्तं महाबलम् ।
यज्ञसंरक्षणार्थाय यममावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः यमेहागच्छेह तिष्ठ यमाय नमः, यममावाहयामि स्थापयामि ।

**निर्ऋतिम्** – (मण्डलाद्वहिः नैर्ऋत्याम्) ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सा त ऽ इत्यानमो देवि निर्ऋते तुभ्यमस्तु ।

सर्वप्रेताधिपं देवं निर्ऋतिं नीलविग्रहम् ।
आवाहये यज्ञसिद्ध्यै नरारूढं वरप्रदम् ।।

ॐ भूर्भुवः स्वः निर्ऋते इहागच्छेह तिष्ठ निर्ऋतये नमः, निर्ऋतिमा० स्थाप० ।

**वरुणम्** -- (ग्रहमण्डलाद्वहिः पश्चिमायाम्) ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुश ࣿ स मा न ऽऽआयुः प्रमोषीः ।

शुद्ध -- स्फटिक -- संकाशं जलेशं यादशां पतिम् ।
आवाहये प्रतीचीशं वरुणं सर्वकामदम् ।।

ॐ भूर्भुवः स्वः वरुण इहागच्छेह तिष्ठ वरुणाय नमः, वरुणमा० स्थाप० ।

**वायुम्** – (मण्डलाद्वहिः वायव्याम्) ॐ आ नो नियुद्भिः शतिनीभिरध्वर ࣿ सहस्रिणीभिरुपयाहि यज्ञम् । वायो ऽ अस्मिन्सवन मायस्व ययं पात स्वस्तिभिः सदा नः ।

मनोजवं महातेजं सर्वतश्चारिणं शुभम् ।
यज्ञसंरक्षणार्थाय वायुमावाहयाम्यहम् ।।

ॐ भूर्भुवः स्वः वायो इहागच्छेह तिष्ठ वायवे नमः, वायुमा० स्थाप० ।

**सोमम्** -- (मण्डलाद्वहिः उत्तरस्याम्) ॐ वय ࣿ सोम व्रते तव मनस्तनुपु विभ्रतः । प्रजावन्तः सचेमहि ।

आवाहयामि देवेशं धनदं यक्षपूजितम् । महावलं दिव्यदेहं नरयानगतिं विभुम् ।।

ॐ भूर्भुवः स्वः सोमेहागच्छेह तिष्ठ सोमाय नमः, सोममावा० स्थाप० ।

**ईशानम्** (ग्रहमण्डलाद्वहिः ईशान्याम्) :--

ॐ तमीशान् जगतस्तस्थुपस्पतिं धियंजिन्वमवसे हूमहे वयम् । पूपा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ।

सर्वाधिपं महादेवं भूतानां पतिमव्ययम् ।
आवाहये तमीशानं लोकानामभयप्रदम् ॥

ॐ भूर्भुवः स्वः ईशानेहागच्छेह तिष्ठ ईशानाय नमः, ईशानमावा० स्थाप० ।

**ब्रह्माणम्** (ईशानपूर्वयोर्मध्ये) :-- ॐ अस्मे रुद्द्रा मेहना पर्व्वतासो व्वृत्रहत्ये भरहूतौ सजोषाः । यः श ७ सते स्तुवते धायि पज्र ऽइन्द्रज्येष्ठा ऽअस्माँ २। ऽअवन्तु देवाः ।

पद्मयोनिं चतुर्मूर्तिं वेदगर्भं पितामहम् ।
आवाहयामि ब्रह्माणं यज्ञसंसिद्धिहेतवे ॥

ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छेह तिष्ठ ब्रह्मणे नमः, ब्रह्माणमावाहयामि स्थापयामि ।

**अनन्तम्** (नैऋत्यपश्चिमयोर्मध्ये) :-- ॐ स्योना पृथिवि नो भवा नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ।

अनन्तं सर्वनागानामधिपं विश्वरूपिणम् ।
जगतां शान्तिकर्तारं मण्डले स्थापयाम्यहम् ॥

ॐ भूर्भुवः स्वः अनन्तेहागच्छेह तिष्ठ अनन्ताय नमः, अनन्तमा० स्थाप० ।

**प्राणप्रतिष्ठा** (हस्ते अक्षतान् गृहीत्वा) :-- ॐ मनो जूतिर्ज्जुषतामाज्जस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ७ समिमं दधातु । विश्वेदेवास ऽइह मादयन्तामो ३ प्रतिष्ठ ।

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्यै देवत्वमर्चायै मामहेति च कश्चन ॥

ॐ भूर्भुवः स्वः आदित्यादिनवग्रहाः साङ्गाः सवाहनाः सपरिवारा अधिदेवताप्रत्यधिदेवताविनायकादिपञ्चलोकपालवास्तोष्पतक्षेत्राधिपतीन्द्रादिदशदिक्पालसहिताः सुप्रतिष्ठिता वरदा भवन्तु । इत्यक्षतान् क्षिपेत् ।

**नाममन्त्रा** :-- ॐ आदित्याय नमः । ॐ सोमाय नमः । ॐ भौमाय नमः । ॐ बुधाय नमः । ॐ बृहस्पतये नमः । ॐ शुक्राय नमः । ॐ शनैश्चराय नमः । ॐ राहवे नमः । ॐ केतवे नमः ॥९॥

ॐ ईश्वराय नमः । ॐ उमायै नमः । ॐ स्कन्दाय नमः । ॐ विष्णवे नमः । ॐ ब्रह्मणे नमः । ॐ इन्द्राय नमः । ॐ यमाय नमः । ॐ कालाय नमः । ॐ चित्रगुप्ताय नमः ।।९।।

ॐ अग्नये नमः । ॐ अद्भ्यो नमः । ॐ भूम्यै नमः । ॐ विष्णवे नमः । ॐ इन्द्राय नमः । ॐ इन्द्राण्यै नमः । ॐ प्रजापतये नमः । ॐ सर्पेभ्यो नमः । ॐ ब्रह्मणे नमः ।।९।।

ॐ विनायकाय नमः । ॐ दुर्गायै नमः । ॐ वायवे नमः । ॐ आकाशाय नमः । ॐ अश्विभ्यां नमः ।।५।।

ॐ वास्तोष्पतये नमः । ॐ क्षेत्राधिपतये नमः ।।२।।

ॐ इन्द्राय नमः । ॐ अग्नये नमः । ॐ यमाय नमः । ॐ निर्ऋतये नमः । ॐ वरुणाय नमः । ॐ वायवे नमः । ॐ कुबेराय नमः । ॐ ईशानाय नमः । ॐ ब्रह्मणे नमः । ॐ अनन्ताय नमः ।।१०।। कलशे ॐ वरुणाय नमः ।

इति नाममन्त्रैर्वा आवाहनासनपाद्यार्घस्नानाचमनवस्त्रयज्ञोपवीतगन्धाक्षतधूपदीपनैवेद्यफलताम्बूलभूषणनीराजनान्तोपचारैर्यथासम्भवं सम्पूजयेत् ।

ॐ भूर्भुवः स्वः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवता-प्रत्यधिदेवता - विनायकादिपञ्चलोकपाल - वास्तोष्पतिक्षेत्राधिपती - न्द्रादिदशदिक्पालसहितेभ्यो नवग्रहेभ्यो नमः आसनार्थे पुष्पाक्षतान् समर्पयामि ।

अनयैव रीत्या -- ॐ भूर्भुवः स्वः सांगेभ्यः पादयो पाद्यं समर्पयामि । हस्तयोर्ध्य समर्पयामि । सर्वाङ्गे स्नानं समर्पयामि । वस्त्रं समर्पयामि । यज्ञोपवीतं समर्प्यामि । गन्धं समर्पयामि । अक्षतं समर्पयामि । पुष्पं समर्पयामि । दूर्वाङ्कुरान् समर्पयामि । धूपमाघ्रापयामि । दीपं दर्शयामि । नैवेद्यं निवेदयामि । हस्तप्रक्षालनम् । आचमनम् । फलम् । ताम्बूलम । दक्षिणाद्रव्यम् । नीराजनं समर्पयामि ।

**पुष्पाञ्जलि :--**

ॐ ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रश्च शनिश्च राहुः केतुश्च सर्वे प्रदिशन्तु शं मे ।।

सूर्यं शौर्यमथेन्दुरुच्चपदवी सन्मङ्गलं मङ्गलः

सद्‌बुद्धिञ्च बुधो गुरुश्च गुरुतां शुक्रः सुखं शं शनिः ॥
राहुर्वाहुवलं करोतु सततं केतुः कुलस्योन्नतिम्
नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥
आयुश्च वित्तञ्च तथा सुखं च धर्मार्थलाभौ वहुपुत्रतां च ।
शत्रुक्षयं राजसु पूज्यतां च तुष्टा ग्रहाः क्षेमकरा भवन्तु ॥

जलं गृहीत्वा -- ॐ अनेन नवग्रहमण्डलस्थसूर्यादिदेवानां पूजनेन ग्रहमण्डलस्थाः सर्वे सुर्यादिदेवताः प्रीयन्तां न मम ।

## "तिलकनाममण्डलचक्रम्"

(पुरश्चरणादि विशिष्टानुष्ठानादौचक्रमिदम् ग्राह्यम् ।)

आयुष्यमन्त्रपाठः -- ॐ आयुष्यं वर्चस्य ७ रायस्पौपमौद्भिदम् । इदं हिरण्यं वर्चस्व जत्रायाविशतादुभाम् । न तद्रक्षा ७ सि न पिशाचास्तरन्ति देवानामोजः प्रथम ७ ह्येतत् । यो विभर्ति दाक्षायण ७ हिरण्यं ७ स देवेपु कृणुते दीर्घमायुः स मनुष्येपु कृणुते दीर्घमायुः । यदावध्नन्दाक्षायणा हिरण्य ७ शतानीकाय सुमनस्यमानाः । तन्म आवध्नामि शतसारदायैजरदष्टिर्यथा-सम् ।।

## रक्षा-बन्धनम् --

(पूजक अपने वायें हाथ में पीली सरसों अथवा चावल, दक्षिणा और मौली लेकर दाहिने हाथ से ढक कर नीचे लिखे मंत्रों के उच्चारण करें ।)

ॐ गणाधिपं नमस्कृत्य नमस्कृत्य पितामहम् ।
विष्णुं रुद्रं श्रियं देवी वन्दे भक्त्या सरस्वतीम् ।।
स्थानाधिपं नमस्कृत्य ग्रहनाथं निशाकरम् ।
धरणीगर्भसम्भूतं शशिपुत्रं बृहस्पतिम् ।।
दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं महाग्रहम् ।
राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेपतः ।।
शक्राद्या देवताः सर्वाः मुनीश्चैव तपोधनान् ।
गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् ।।
वशिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम् ।
व्यासं मुनिं नमस्कृत्य सर्वशास्त्रविशारदम् ।।
विद्याधिका ये मुनयः आचार्याश्च तपोधनाः ।
तान् सर्वान् प्रणमाम्येव यज्ञरक्षाकरान् सदा ।।

(नीचे लिखे मंत्रों से दशों दिशाओं में पीली सरसों अथवा चावल दाहिने हाथ से छोड़ें ।)

पूर्वे रक्षतु वाराहः आग्नेय्यां गरुडध्वजः ।
दक्षिणे पद्मनाभमस्तु नैर्ऋत्यां मधुसूदनः ।।
पश्चिमे पातु गोविन्दो वायव्यां तु जनार्दनः ।
उत्तरे श्रीपती रक्षेद् ऐशान्यां तु महेश्वरः ।।

ऊर्ध्वं गोवर्धनो रक्षेद् ह्याधो ऽनन्तस्तथैव च ।
एवं दश दिशो रक्षेद् वासुदेवो जनार्दनः ।।
रक्षाहीनं तु यत्स्थानं रक्षत्वीशो ममाद्रिधृक् ।
यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ।
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिकः ।।
सर्वेषामविरोधेन पूजाकर्म समारभे ।

(इसके बाद मौली गणेश जी के समक्ष रख दें । पुनः उस मौली में से गणपत्यादि समस्त देवताओं को चढ़ाकर रक्षा बन्धन करें ।)

ॐ गणेशाम्बिकाभ्यां नमः रक्षासूत्रं समर्पयामि ।
ॐ मोदादिषड् विनायकेभ्यो नमः रक्षासूत्रं समर्पयामि ।
ॐ वरुणाय नमः रक्षासूत्रं समर्पयामि ।
ॐ नवग्रहेभ्यो नमः रक्षासूत्रं समर्पयामि ।
ॐ षोडशमातृकाभ्यो नमः रक्षासूत्रं समर्पयामि ।

**मन्त्रः** -- (ब्राह्मण के हाथ में रक्षाबन्धन कर तिलक करें ।)

ॐ व्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोतिदक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ।।

**मन्त्रः** -- (यजमान के हाथ में रक्षासूत्र बाँध कर तिलक करें ।)

ॐ यदा बध्नन् दाक्षायणा हिरण्य ७ शतानीकाय सुमनस्यमानाः । तन्म ऽआवध्नामि शतशारदायायुष्मान् जरदष्टिर्य्यथासम् ।

येन बद्धो बली राजा दानवेन्द्रो महाबलः ।
तेन त्वामनुबध्नामि रक्षे मा चल मा चल ।।

## आभ्युदयिक-नान्दीमुखश्राद्धम्

(सांकल्पिक आभ्युदयिक नन्दीमुख षोडशमातृका के समक्ष ही करने का विधान है । पूर्वाभिमुख सव्य रहकर ही देवपूजा की तरह इसमें पितरों की अर्चना होती है । पूर्व दिशा की ओर सत्यवसु नामक विश्वेदेव के लिए दो आसन रखें, जिन पर दूर्वा अथवा कुशा के शिरो भाग पर गाँठ बाँधकर उत्तराग्रक्रम से रख दें । माता, पितामही एवं प्रपितामही तथा पिता, पितामह और प्रपितामह के लिए ६ आसन रखें । सपत्नीक मातामह, प्रमातामह, वृद्धप्रमातामह के लिए

भी ३ आसन रखें । सपत्नीक विश्वेदेव को लेकर ११ आसन होते हैं । अपनी क्षमता के अनुसार सबका सपत्नीक आसन ८ रखकर भी पूजन किया जा सकता है । यह भी शास्त्रीय विधान ही है ।)

## संकल्प :--

अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्राणाम् मातृपितामही प्रपितामही नाम् अमुकदेवीनां गायत्रीसावित्रीसरस्वती स्वरूपाणां नान्दीमुखीनां तथा अमुकगोत्राणां पितृपितामहप्रपितामहानाम् अमुक देवानां वसुरुद्रादित्य-स्वरूपाणां नान्दीमुखानां तथामुकगोत्राणाम् मातामह प्रमातामहवृद्धप्रमाता-महानाम् अमुकदेवानां सपत्नीकानां अग्निवरुणप्रजापति स्वरूपाणां नान्दी-मुखानां प्रीतये अमुककर्म्मनिमित्तकं सत्यवसुसंज्ञकविश्वेदेवपूर्वकं संक्षिप्त संकल्पविधिना नान्दी मुखश्राद्धमहं करिष्ये ।

न स्वधाशर्मवर्मेति पितृनाम न चोच्चरेत् ।<br>
न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः ।।<br>
न तिलैर्नापसव्येन पित्र्यमन्त्रविवर्जितम् ।<br>
अस्मच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित् ।।

## आभ्युदयिकनान्दीश्राद्धप्रारूपः

पूर्व

विश्वेदेव
(१)

उत्तर

सपत्नीत-मातामह-प्रमातामह-वृद्धप्रमातामह
१ २ ३
(१)

पितृ-पितामह-प्रपितामह
१ २ ३
(२)

मातृ पितामही-प्रपितामही
१ २ ३
(३)

दक्षिण

पश्चिम

**पादप्रक्षालनम्** -- (पादप्रक्षालन के लिए आसन पर जल छोड़ें ।)

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ।

ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ।

ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ।

ॐ मातामह-प्रमातामह-वृद्धप्रमातामहा सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ।

**आसनदानम्** -- (विश्वेदेव के लिए कुश का आसन तथा अन्य के लिए यथासाध्य आसन दें ।)

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां यता प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ।

ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ।

ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो तथा प्राप्नुवामः ।

ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ।

**गन्धादिदानम्** :--

(विश्वेदेव तथा मातृपितामहीप्रपितामही पितृपितामह प्रापेतामह, सपत्नीक मातामह-प्रमातामह-वृद्धप्रमातामह के आसन पर जल, वस्त्र, यज्ञोपवीत चन्दन (रोली) अक्षत, पुष्प, धूप, दीपक, नैवेद्य, ऋतुफल, पानसुपारी आदि अर्पण कर पूजन करें ।

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ।

ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ।

ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ।

ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ।।

**भोजननिष्क्रयदानम् :--** (भोजन-निष्क्रय निमित्त दक्षिणा दें ।)

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्ताऽऽमान्न-निष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ।

ॐ मातृ-पितामही प्रपितामह्यः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्मब्राह्मणभोजन-पर्याप्ताऽऽमान्न-निष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ।

ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म-ब्राह्मणभोजन पर्याप्ताऽऽमान्न-निष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ।

ॐ मातामह-प्रमातामह-वृद्धप्रमतामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म-ब्राह्मण-भोजनपर्याप्ताऽऽमान्न-निष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ।

**सक्षीरयवमुदकदानम् --** (दूध, जब एवं जल मिलाकर अर्पण करें ।)

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम् ।
मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः प्रीयन्ताम् ।
पितृ-पितामह-प्रपितामहाः नान्दीमुखाः प्रीयन्ताम् ।
मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः प्रीयन्ताम् ।

**जलाऽक्षतपुष्पप्रदानम् --** (जल, पुष्प एवं चावल सभी आसनों पर छोड़ें ।)

चतुर्थस्थानेषु -- शिवा आपः सन्तु इति जलम् । सौमनस्यमस्तु इति पुष्पम् । अक्षत चाऽरिष्टं चाऽस्तु इत्यक्षतान् ।

**जलधारादानम्** -- (पितरों के लिए अँगूठे की ओर से पूर्वाग्र जलधारा दें ।)

ॐ अधोराः पितरः सन्तु । इति पूर्वाग्रां जलधारां दद्यात् ।

**आशीः प्रार्थना** -- (हाथ जोड़कर प्रार्थना करें ।)

यजमानः कृताञ्जलिः प्रार्थयेत् --

ॐ गोत्रन्नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद् वहुदेयं च नोऽस्तु । अन्नं च नो वहुभवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्चन । एताः सत्या आशिषः सन्तु ।

ब्राह्मणाः सन्त्वेताः सत्या आशिष इति ।

**दक्षिणादानम्** :--

(मुनक्का, आँवला, यव तथा अदरख मूल आदि लेकर दक्षिणा सहित अलग-अलग संकल्प पूर्वक अर्पण करें ।)

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थ द्राक्षाऽऽमलकयवमूलनिष्क्रयिणी दक्षिणां दातुमहमुत्सृजे ।

ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठा-सिद्ध्यर्थ द्राक्षामलक-यवमूलनिष्क्रयिणी दक्षिणां दातुमहमुत्सृजे ।

ॐ पितृ पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थ द्राक्षामलकयवमूलनिष्क्रयिणी दक्षिणां दातुमहमुत्सृजे ।

ॐ मातामह-प्रमाताह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थ द्राक्षाऽऽमलकयव-मूलनिष्क्रयिणी दक्षिणां दातुमहमुत्सृजे ।

**मन्त्रः** -- (यजमानः वदेत्) (यजमान स्वयं कहें ।)

ॐ उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ २ इयक्षते । ॐ इडामग्ने पुरुद ७ स ७ सनिं गोः शश्वत्तम ७ हव मानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ।।

अनेन नान्दीश्राद्धं सम्पन्नम्, इति यजमानः ।

ब्राह्मणाः -- सुसम्पन्नम् ।

**विसर्जनम्** -- (निम्न मन्त्र पढ़कर विसर्जन करें ।)

ॐ व्वाजेवाजेऽवत व्वाजिनो नो धनेषु विप्राऽअमृताऽऋतज्ञाः । अस्य मद्ध्वः पिवत मादयद्ध्वं तृप्तां यात पथिभिर्द्देवयानैः ।

ॐ आ मा व्वाजस्य प्रसवो जगम्म्या देमे द्यावापृथिवी व्विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमोऽअमृतत्वेन गमयात् ।।

इति मन्त्रेण विसृज्य, हरिम स्मरेत् ।

**आचार्यवरणम्** :--

उदङ्मुखमाचार्यमुपवेश्य पादप्रक्षालनपूर्वकं गन्धादिभिः सम्पूज्य वरणद्रव्य जलाक्षतान्यादाय -- ॐ तत्स० अमुकगोत्रोत्पन्नः अमुकप्रवरान्वितः अमुकशर्माऽहम् अमुकगोत्रोत्पन्नममुकप्रवरान्वितं शुक्लयजुर्वेदान्तर्गत-वाजसनेयमाध्यन्दिनीयशाखाध्या यिनममुकशर्माणं ब्राह्मणस्मिन् कर्त्तव्ये अमुकयागाख्ये कर्मणि दास्यमानैः एभिर्वरणद्रव्यैः आचार्यत्वेन त्वामहं वृणे । वृतोऽस्मि, इति ब्राह्मणः

**यजमानः** --

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ।।

**ब्रह्मवरणम्** :--

पूर्ववत् वरणसामग्रीमादाय ॐ अद्यामुकेमासे अमुकेपक्षे अमुकतिथौ अमुकगोत्रः अमुकप्रवरः अमुकशर्मवमोदे यजमानः अमुकप्रवरम् अमुकगोत्रम् अमुकशर्माणं ब्राह्मणं कृतकृतावेक्षणरूप ब्रह्मकर्मकर्तुम् एभिः वरणद्रव्यैः त्वामहं वृणे । ततो ब्रह्मावृतोऽस्मीति प्रतिवचनं ब्रूयात् ।

**यजमानः** --

यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः ।
तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ।।

**ऋत्विक्वरणम् --**

अस्मिन् कर्तव्ये अमुकयागाख्ये कर्मणि दास्यमानैः एभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं ऋत्विक्त्वेन त्वामहं वृणे । इति यजमानः । वृत्तोऽस्मि इति विप्रप्रतिवचनम् ।

**यजमान :--**

भगवन् सर्वधर्मज्ञ ! सर्वधर्मपरायण !
वितते मम यज्ञेऽस्मिन्नृत्विक् त्वं मे मखे भव ।।
ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्त्यमाप्यते ।।

ततो यजमानः करसम्पुटं कृत्वा सर्वान् प्रार्थयेत् --

(इसके बाद यजमान हाथ जोड़कर सबकी प्रार्थना करें ।)

**प्रार्थना :--**

अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ।
ग्रहध्यानरताः नित्यं प्रसन्नमनसः सदा ।।
अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः ।
ममाऽपि नियमा ह्येते भवन्तु भवतामपि ।।
ऋत्विजश्च यथा पूर्व शक्रादीनां मखेऽभवन् ।
यूयं तथा मे भवत ऋत्विजो द्विजसत्तमाः ।।
अस्मिन्कर्माणि ये विप्राः वृता गुरुमुखादयः ।
सावधानाः प्रकुर्वन्तु स्वं स्वं कर्म यथादितम् ।।
अस्य यांगस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नैः प्रकर्तव्यं कर्मेद विधिपूर्वकम् ।।
यथा विहितं कर्मकुरु । (एकतन्त्रपक्षे -- कुरुत)
विप्रः -- यथाज्ञानं करवाणि । (करवाम)

# विष्णु-पूजनम्

प्रातः काल स्नान-सन्ध्या आदि नित्यकर्म से निवृत्त होकर विष्णु-पूजनार्थ पवित्र आसन पर बैठ कर आचमन, प्राणायाम कर 'ॐ अपवित्रः पवित्रो वा०' इससे अपने शरीर का और पूजासामग्री का पवित्र जल से सम्प्रोक्षण करें । पश्चात् अपने दाहिने हाथ में अक्षत, पुष्प तथा जल लेकर इस प्रकार संकल्प करें --

'ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशान्तर्गते अमुकक्षेत्रे अमुकनगरे (अमुकग्रामे) अमुक विक्रमाब्दे बौद्धावतारे अमुकनामसंवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रः अमुकशर्माऽहम् (अमुकवर्माऽहम्, अमुकगुप्तोऽहम्) ममात्मनः श्रुति-स्मृति पुराणोक्तफलप्राप्त्यर्थ धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं यथोपचारैः श्रीविष्णुपूजनमहं करिष्ये ।

**ध्यानम्** -- शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं ।
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं ।
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ।।

**आवाहनम्** -- ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमि ꣳ सर्व्वतस्पृत्त्वात्त्यतिष्ठद्दशङ्गुलम् ।।
आगच्छ भगवन्देव स्थाने चात्र स्थिरो भव ।
यावत्पूजां करिष्यामि तावत्त्वं सन्निधौ भव ।।
श्रीभगवते विष्णवे नमः आवाहयामि स्थापयामि ।
(आवाहन के लिए पुष्प अर्पित करें ।)

**आसनम्** -- ॐ पुरुष ऽएवेद ꣳ सर्व्वं यद् भूतं यच्च भाव्यम् ।
उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ।।
रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ।
आसनं च मया दत्तं गृहाण परमेश्वर ।।
श्रीभगवते विष्णवे नमः आसनं समर्पयामि ।
(आसन के लिए पुष्प अर्पित करें ।)

**पाद्यम्** -- ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।।
उष्णोदकं निर्मलं च सर्व सौगन्ध्यसंयुतम् ।
पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ।।
श्रीभगवते विष्णवे नमः पादयोः पाद्यं जलं समर्पयामि ।
(पाद्य के लिए जल अर्पित करें ।

**अर्घ्यम्** --

रजत अथवा ताम्रके अर्घ्यपात्र में गंगाजल, चन्दन, अक्षत, पुष्प तुलसीदल लेकर भगवान् विष्णुको अर्घ्य प्रदान करें --

ॐ त्रिपादूर्ध्व ऽउदैत्पुरुषः पादोऽस्येहा भवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने ऽअभि ।।

अर्घ्य गृहाण देवेश गन्धपुष्पाक्षतैः सह ।

करुणाकर मे देव गृहाणार्घ्यं नमोऽस्तु ते ॥

श्रीभगवते विष्णवे नमः हस्तयोरर्घं समर्पयामि ।

(पात्रस्थ जल गन्धाक्षतपुष्प अर्पण करें ।)

**आचमनम्** -- ॐ ततो विराड्जायत विराजो ऽअधिपूरुषः ।

स जातो ऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥

सर्वतीर्थ समायुक्तं सुगन्धि निर्मलं जलम् ।

आचम्यतां मया दत्तं गृहीत्वा परमेश्वर ॥

श्रीभगवते विष्णवे नमः आचमनीय जलं समर्पयामि ।

(आचमन के लिए जल छोड़ें ।)

**स्नानम्** -- ॐ तस्माद्यज्ञात् सर्व्वहुतः सम्भृतं पृषदाज्यम् ।

पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥

गंगासरस्वतीरेवापयोष्णी नर्मदाजलैः ।

स्नापितोऽसि मया देव तथा शान्तिं कुरुष्व मे ॥

श्रीभगवते विष्णवे नमः स्नानार्थं जलं समर्पयामि ।

(स्नान के लिए जल अर्पण करें ।)

**पञ्चामृतस्नानम्** --

ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः ।

सरस्वती तु पञ्चधा सोऽदेशे भवत्सरित् ॥

पञ्चामृतं मयानीतं पयो दधि घृतं मधु ।

शर्करा च समायुक्तं स्नानार्थं प्रतिगृह्यताम् ॥

श्रीभगवते विष्णवे नमः पञ्चामृतस्नानं समर्पयामि ।

(पंचामृत से स्नान करायें ।)

**शुद्धोदकस्नानम्** --

ॐ शुद्धवालः सर्व्वशुद्धवालो मणिवालस्त ऽआश्विनाः ।

श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा

ऽअवलिप्ता रौद्रा नभोरूपाः पार्ज्जन्याः ॥

मलयाचलसम्भूतं चन्दनागुरुसम्भवम् ।
चन्दनं देवदेवेश स्नानार्थ प्रतिगृह्यताम् ।।
श्रीविष्णवे नमः शुद्धोदकस्नानं समर्पयामि ।
(शुद्ध जल से स्नान करायें ।)

**सुगन्धिद्रव्यस्नानम् --**

ॐ त्रयम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ।।
श्रीभगवते विष्णवे नमः सुगन्धिद्रव्यस्नानं समर्पयामि ।
(चन्दन या इत्र से स्नान करायें ।)

**वस्त्रम् --** ॐ तस्माद्यज्ञात्सर्व्वहुत ऽऋचः सामानि जज्ञिरे ।
छन्दाᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।।
सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।
मयोपपादिते तुभ्यं गृह्येतां वाससी शुभे ।।
श्रीभगवते विष्णवे नमः वस्त्रं समर्पयामि । (वस्त्रोपवस्त्र)

**यज्ञोपवीतम् --**

ॐ तस्मादश्वा ऽअजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता ऽअजावयः ।।
नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं मया दत्तं गृहाण परमेश्वर ।।

श्रीभगवते विष्णवे नमः यज्ञोपवीतं समर्पयामि । यज्ञोपवीतान्ते आचमनीयं जलं समर्पयामि । (यज्ञोपवीत पहनाकर जल छोड़ें ।)

**चन्दनम् --** ॐ तं यज्ञं वर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा ऽअयजन्त साध्या ऽऋषयश्च ये ।।
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ।।
श्रीभगवते विष्णवे नमः चन्दनं समर्पयामि ।
(चन्दन चढ़ायें ।)

**पुष्पमाला** -- ॐ यत्पुरुषं व्यदधुः कतिधाव्यकल्पयम् ।
मुखं किमस्यासीत् किं बाहू किमूरू पादा ऽउच्येतें ।।
माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाऽऽनीतानि पुष्पाणि पूजार्थ प्रतिगृह्यताम् ।।
श्रीभगवते विष्णवे नमः, पुष्पमालां समर्पयामि ।
(फूल एवं फूल की माला चढ़ायें ।)

**तुलसीदलम्** --ॐ इदं विष्णुर्विष्णक्क्रमे त्रेधा निदधे पदम् ।
समूढमस्य पाᳬसुरे स्वाहा
तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम् ।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ।।
श्रीभगवते विष्णवे नमः, तुलसीदलानि समर्पयामि ।
(तुलसीदल चढ़ायें।)

**अङ्गपूजनम्** --

ॐ दामोदराय नमः पादौ पूजयामि । ॐ माधवाय नमः जानुनीः पूजयामि । ॐ पद्मनाभाय नमः नाभिं पूजयामि । ॐ विश्वमूर्तये नमः उदरं पूजयामि । ॐ ज्ञानगम्याय नमः हृदयं पूजयामि । ॐ श्रीकण्ठाय नमः कण्ठं पूज्यामि । ॐ सहस्त्रभानवे नमः वाहूं पूज्यामि । ॐ योगिने नमः नेत्र पूजयामि । ॐ उरगाय नमः ललाटं पूजयामि । ॐ नाकसुरेश्वराय नमः नासिकां पूजयामि । ॐ श्रवणेशाय नमः श्रोत्रे पूजयामि । ॐ सर्वकर्मप्रदाय नमः शिखां पूजयामि। ॐ सहस्त्रशीर्ष्णे नमः शिरः पूजयामि । ॐ सर्वस्वरूपिणे नमः सर्वाङ्गं पूजयामि ।

**धूपः** -- ॐ व्राह्मणोऽस्य मुखमासीद वाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्या ᳬ शूद्रो ऽअजायत ।।
वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।
श्रीभगवते विष्णवे नमः, धूपमाघ्रापयामि ।
(धूप की ओर अक्षत छोड़ें ।)

**दीपम् --** ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो ऽअजायत ।
श्रोत्राद् व्वायुश्च प्राणश्च मुखादग्निरजायत ।।
साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ।।
श्रीभगवते विष्णवे नमः, दीपं दर्शयामि । हस्तप्रक्षालनम् ।
(दीपक की ओर अक्षत छोड़कर हाथ धो लें ।)

**नैवेद्यम् --** ॐ नाब्भ्या ऽआसीदन्तरिक्ष ७ शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां भूमिर्द्दिशः श्रोत्रात्तथा लोकाँ२ ऽअकल्पयन् ।।

श्रीभगवते विष्णवे नमः, नैवेद्यं निवेदयामि । नैवेद्यान्ते आचमनीयं जलं समर्पयामि ।

नैवेद्य में तुलसी छोड़कर उसको अभ्युक्षण कर, गन्ध और पुष्प से अच्छादित करें । पश्चात् धेनुमुद्रा से अमृतीकरण कर योनिमुद्रा को दिखला कर घण्टा बजावें । पश्चात् ग्रासमुद्रा को दिखलावें और ॐ प्राणाय स्वाहा । (कनिष्ठिका, अनामिका और अँगूठा मिलावें । ॐ अपनाय स्वाहा । (तर्जनी, मध्यमा, अनामिका और अँगूठा मिलावें । ॐ व्यानाय स्वाहा । (मध्यमा, तर्जनी और अँगूठा मिलावें) । ॐ समानाय स्वाहा । (समस्त अँगुलियाँ तथा अँगूठा मिलावें) । इस प्रकार उच्चारण करें और बीच-बीच में जल समर्पित करें । उत्तरापोशनार्थ पुनः नैवेद्य निवेदन करें । हस्तप्रक्षालनार्थ और मुखप्रक्षालनार्थ जल समर्पण करें । पुनः आचमनीय जल अर्पित करें ।

## करोद्वर्त्तनम् (चन्दन)

ॐ अ ७ शुनाते ऽअ ७ शुः पृच्यतां परुषा परुः ।
गन्धस्ते सममवतु मदाय रसो ऽअच्युतः ।।
करोद्वर्त्तनकं देव सुगन्धैः परिवासितैः ।
गृहीत्वा मे वरं येहि परत्र च परां गतिम् ।।

श्रीभगवते विष्णवे नमः करोद्वर्त्तनार्थे गन्धं समर्पयामि । हस्तप्रक्षालनार्थं जलं समर्पयामि । (चन्दन चढ़ाएँ, पुनः जल छोड़ें)

**ऋतुफलम् --**

ॐ याः फलिनीर्य्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व ७ हसः ।।

नानाविधानि दिव्यानि मधुराणि फलानि वै ।
भक्त्यार्पितानि सर्वाणि गृहाण परमेश्वर ॥
श्रीभगवते विष्णवे नमः, ऋतुफलानि समर्पयामि । (फल चढ़ायें)

**ताम्बूलम्** -- (पूगफल-एला-लवङ्ग सहित)

ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
व्वसन्तोऽस्थासीदाज्यं ग्रीष्म ऽइध्मः शरद्धविः ॥
पूगीफलादिसहितं कर्पूरेण च संयुतम् ।
ताम्बूलं कोमलं दिव्यं गृहाण परमेश्वर ॥
श्रीभगवते विष्णवे नमः मुखवासार्थ ताम्बूलं समर्पयामि ।(ताम्बूल चढ़ायें)

**दक्षिणा** -- ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक ऽआसीत् ।
स दाधार पृथिवी द्यामुतेमां कस्मै देवाय हविषा व्विधेम ॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥
श्रीभगवते विष्णवे नमः, दक्षिणां समर्पयामि । (द्रव्य दक्षिणा अर्पण करें)

**आर्तिक्यम्** --

ॐ इदᳫं हविः प्रजननं मे ऽअस्तु दशवीरᳫं सर्वगणᳫं स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ॥ अग्निः प्रजां बहुलां मे करोत्त्वन्नं पयो रेतो ऽअस्मासु धत्त ॥१॥

ॐ आ रात्रि पार्थिव ᳫं रजः पितुरप्रायि धामभिः । दिवः सदाᳫंसि बृहती व्वि तिष्ठठस ऽआ त्त्वेषं व्वर्त्तते तमः ॥

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।
सदावसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥
श्रीभगवते विष्णवे नमः, आरार्तिक्यं समर्पयामि । (आरती करें ।)

**प्रदक्षिणा** -- ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वानाऽअवध्नन् पुरुषं पशुम् ॥
यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ॥
श्रीभगवते विष्णवे नमः, प्रदक्षिणां समर्पयामि । (प्रदक्षिणा करें)

**मन्त्रपुष्पाञ्जलिः --**

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्

ते ह नाकं महिमांनः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ।।

ॐ राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ।। ॐ स्वस्ति । साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौमः सार्वायुप आन्तादापरार्धात्, पृथिव्यै समुद्रपर्यन्ताया एकराडिति । तदप्येप श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्य कामप्रेविश्वेदेवाः सभासद इति ।।

ॐ व्विश्वतश्चक्षुरुत व्विश्वतो मुखो व्विश्वतो बाहुरुत व्विश्वतस्पात् । सम्वाहुब्भ्यां धमति सम्पतंत्रैर्द्यावाभूमी जनयन्देव ऽएकः ।।

**विष्णु-गायत्री --** ॐ नारायणाय विद्महे वासुदेवाय धीमहि ।

तन्नो विष्णुः प्रचोदयात् ।।

श्रीभगवते विष्णवे नमः मन्त्रपुष्पाञ्जलि समर्पयामि । (मन्त्र पुष्पाञ्जलि अर्पित करें ।)

प्रणामः -- शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं

विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।

लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं

वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ।। (प्रणाम करें)

क्षमा-प्रार्थना -- मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।

यत्पूजितं मया देव परिपूर्णं तदस्तु मे ।।१।।

आवाहनं न जानामि न जानामि तवार्चनम् ।

पूजां चैव न जानामि क्षमस्व परमेश्वर ।।२।।

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।

दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ।।३।।

**मन्त्रः** -- अनेन यथाशक्तिकृतेन पूजनेन भगवान् श्रीविष्णुः प्रीयतां न मम ।

(इस मन्त्र को पढ़कर जल छोड़ें ।)

'वन्दे शिवं शंकरम्'

# शिवपूजनम्

शिवपूजनकर्त्ता स्नान-सन्ध्योपासनादि नित्यकर्म से निवृत्त होकर पवित्र स्थान में पूजन-सामग्री को अपनें सम्मुख रख कर कुशा आदि के पवित्र आसन पर बैठें । इसके बाद ॐ केशवाय नमः । ॐ नारायणाय नमः । ॐ माधवाय नमः । उच्चारण कर तीन बार आचमन एवं तीन बार प्राणायाम करें । पुनः विनियोग करें --

ॐ अपवित्रः पवित्रो वेत्यस्य वामदेव ऋपिर्विष्णुर्देवता गायत्री छन्दः हृदि पवित्रकरणे विनियोगः ।

निम्नलिखित मन्त्र को पढ़कर पूजन-सामग्री के ऊपर और अपने ऊपर जल छिड़कें --

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ।।

पुनः विनियोग करें --

ॐ पृथ्वीति मन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः । (निम्नलिखित मन्त्र का उच्चारण कर आसन पर जल छिड़कें ।)

ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।

# नाममन्त्रेण क्षेत्रपालपूजनमन्त्राः

| मन्त्रांशाः | देवनामानि | मन्त्रांशाः | देवनामानि |
|---|---|---|---|
| १ ॐ इमौ ते पक्षावजरौ | अजराय नमः | प्रथमावाच्च सरथिना | व्यापकाय नमः |
| ३ इद्रस्य व्वज्रोऽसि | इन्द्रचौराय नमः | एवेदिन्द्रं व्वृषणम् | इन्द्रमूर्तये नमः |
| ५ उक्षा समुद्रः | उक्ष्णे नमः | यद्देवा देव हेडनम् | कूष्माण्डाय नमः |
| ७ स न ऽइन्द्राय यज्यवे, | वरुणाय नमः | वाहू मे वलमिन्द्रियम् | वटुकाय नमः |
| ९ मुम्यन्तु मा शपथ्यादथः, | विमुक्ताय नमः | कुर्व्वन्नेवेह कर्म्माणि. | लिप्तकाय नमः |
| ११ सत्रः सिन्धुरवभृयायोद्यतः, | नीललोकाय नमः | नमो गणेभ्यः, | एकदंष्ट्राय नमः |
| १३ अर्म्येब्भ्योहस्तिपम्, | ऐरावताय नमः | | |
| १४ ओषधीः प्रतिमोदद्ध्वम् | ओषधीघ्नाय नमः | त्र्यम्बकं यजामहे, | बन्धनाय नमः |
| १६ देवसवितः प्रसुव यज्ञम्, | दिव्यकराय नमः | सीसेन तन्त्रम्, | कम्बलाय नमः |
| १८ आशुः शिशानः | भीषणाय नमः | इमर्ठ० साहस्रम् | गवयाय नमः |
| २० कुम्भो व्वनिष्ठुः | घण्टाय नमः | आक्रन्दय बलमोजः | व्यालाय नमः |
| २२ इन्द्रायाहि धिये | अशवे नमः | चन्द्रमा ऽअप्स्वन्तरा | चन्द्रवारुणाय नमः |
| २४ गणानान्त्वा | घटाटोपाय नमः | उग्रं लोहितेन | जटिलाय नमः |
| २६ पवित्त्रेण पुनीहि मा, | क्रतवे नमः | आजिघ्र कलशम् | घण्टेश्वराय नमः |
| २८ व्वायो शुक्रः | विकटाय नमः | दैव्या होतारा | मणिमानाय नमः |
| ३० त्रीणि त आहुः | गणबन्धाय नमः | प्रतिश्रुत्कायाऽअर्त्तनम् | मुण्डाय नमः |
| ३२ शुद्धवालः सर्व्वशुद्धवालः, | बर्बूकराय नमः | व्वनस्पते व्वीड्वम्, | सुधापाय नमः |
| ३४ सुपर्ण व्वस्ते | वैनाय नमः | अग्नेऽअच्छा व्वदेहनः | पवनाय नमः |
| ३६ भद्रं कर्ण्णेभिः | ढुण्ढिकरणाय नमः | अपां फेनेन | स्थविराय नमः |
| ३८ व्वातं प्राणेय | दन्तुराय नमः | इदर्ठ० हविः | धनदाय नमः |
| ४० खडगो व्वैश्वदेवः, | नागकर्णय नमः | मृगो न भीमः | महाबलाय नमः |
| ४२ इन्दुर्दक्षः | फेत्काराय नमः | तीव्रान् घोषान् | सिंहाय नमः |
| ४४ अग्निर्दूतम् | मृगाय नमः | अदित्यास्त्वा | अक्षाय नमः |
| ४६ द्यौस्ते पृथिव्यन्तरिक्षम्, | मेघवाहनाय नमः | सं वर्हिरङ्क्ताम् | तीक्ष्णाय नमः |
| ४८ पवमानः सो ऽअद्य नः | अमलाय नमः | अभ्यर्षत्त सुष्टुतिम् | शुक्राय नमः |

# कुण्डस्थदेवतापूजनपूर्वकाग्निस्थापनम्

सपत्नीको यजमानःकुण्डस्य समीपे कुण्डपश्चिमदिग्भागे उपविश्य आचमनं प्राणायामञ्च कृत्वा संकल्पं कुर्यात् । अद्येत्यादि० शुभपुण्यतिथौ मया प्रारब्धस्य सग्रहमखामुकयागकर्मणः साङ्गतासिद्धयर्थम् अस्मिन्कुण्डे कुण्डस्थदेवतानाम् आवहनप्रतिष्ठापूजनानि तथा च कुण्डे पञ्चभूसंस्कारपूर्वकम् अग्निप्रतिष्ठां करिष्ये ॥

तत आचार्यानुज्ञया कश्चिद्विप्र उत्थाय हस्ते कुशान् गृहीत्वा तैः अग्न्यायतनं (कुण्डं) सम्मार्ज्य । ॐ आपोहिष्ठ्ठामयो० । ॐ योव -- शिवतमो० । ॐ तस्माऽअरङ्ग० ॥ कुशोदकेन प्रोक्षयेत् ॥ तत आवाहयेत्

आवाहयामि तत्कुण्डं विश्वकर्मविनिर्मितम् । शरीरं यञ्च ते दिव्यमग्न्यधिष्ठानमद्भुतम् । ॐ भूर्भुवः स्वः कुण्डाय नमः कुण्डनम् आवाह० स्थाप० ॥ प्रार्थयेत् -- ये च कुण्डे स्थिता देवाः कुण्डाङ्गे याश्च देवताः । ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं ददन्तु नः ॥ इत्यावाह्य कुण्डमध्ये देवान् आवाहयेत् -- ॐ व्विश्वकर्म्मन्हविषाव्वर्द्धनेनत्त्रातारमिन्द्रमकृणोरवद्ध्वम् । तस्मैव्विशः समनमन्तपूर्व्वीरयमुग्ग्रोवित्रहव्योयथासत् । उपयाम-गृहीतोसीन्द्रायत्त्वाव्विश्वकर्म्मणऽएपते योनिरिन्द्रायत्त्वाव्विश्वकर्म्मणे ॥ कुण्डमध्ये – ॐ भूर्भुः स्वः विश्वकर्मणे नमः विश्वकर्माणम् आवा० स्थाप० ॥ भो विश्वकर्मन् इहागच्छ इह तिष्ठ ॥ प्रार्थयेत् – ब्रह्म वक्त्रं भुजौ क्षत्रमूरू वैश्यः प्रकीर्तितः । पादौ यस्य तु शूद्रो हि विश्वकर्मात्मने नमः । अज्ञानाज्ज्ञानतो वापि दोषाः स्युः खननोद्भवाः ॥ नाशय त्वखिलाँस्ताँस्तु विश्वकर्मन्नमोऽस्तु ते ॥

तत्रादौ मेखलादेवतानाम् आवाहनम् -- ॐ उपरिमेखलायाम्-इदंव्विष्णुर्व्विचक्रमेत्त्रेधानिदधेपदम् ॥ समूढमस्यपाᳬसुरेस्वाहा ॥ विष्णो यज्ञपते देव दुष्टदैत्यनिषूदन ॥ विभो यज्ञस्य रक्षार्थ कुण्डे सन्निहितो भव ॥ ॐ ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुम् आवा० स्थाप० ॥ भो विष्णो इहागच्छ इह तिष्ठ ॥१॥ मध्यमेखलायां रक्तवर्णालङ्कृतायाम् ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यव्विष्ठ्ठयाःसतश्चयोनिमसतश्चव्विव -- ॥ हंसपृष्ठसमा

रूढ आदिदेव जगत्पये । रक्षार्थं मम यज्ञस्य मेखलायां स्थिरो भव ।। ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आवा० स्थाप० ।। भो ब्रह्मन् इहागच्छ इह तिष्ठ ।।२।। अधो मेखलायां कृष्णवर्णालङ्कृतायाम् ॐ नमस्तेरुद्रम-न्यवऽउतोतइपवेनम -- ।। वाहुब्भ्यामुततेनम ०० ।। गंगाधर मादेव वृषारूढ महेश्वर ।। आगच्छ मम यज्ञेऽस्मिंरक्षार्थ रक्षासा गणात् ।। ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रम् आवा० स्थाप० ।। भो रुद्र इहागच्छ इह तिष्ठ ।।३।।

**अथ योन्यावाहनम्** -- ॐ क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि । मात्त्वाहिᳬसीन्माहिᳬसीः ।। आगच्छ देवि कल्याणि जगदुत्पत्तिहेतुके ।। मनोभवयुते रम्ये योनि त्वं सुस्थिरा भव ।।१।। जगदुत्पत्तिकायै मनोभवयुतायै योन्यै नमः योनिमावा० स्थाप० ।। भो जगदुत्पत्तिके मनोभवयुतं योनि इहागच्छ इह तिष्ठ ।। प्रार्थयेत् -- सेवन्ते महतीं योनिं देवर्षिसिद्धमानवाः ।। चतुरशीतिलक्षाणि पन्नगाद्याः सरीसृपाः ।। पशवः पक्षिणः सर्वे संसरन्ति यतां भुवि ।। योनिरित्येव विख्याता जगदुत्पत्तिहेतुका ।। मनोभवयुता देवी रतिसौख्यप्रदायनी ।। मोहयित्री सुराणाञ्च जगद्धात्रि नमोऽस्तु ते । योने त्वं विश्वरूपाऽसि प्रकृतिर्विश्वधारिणी ।। कामस्था कामरूपा च विश्वयोन्यै नमो नमः ।।

**अथ कण्ठदेवतावाहनम्** ॐ नीलग्ग्रीवाः शितिकण्ठादिव ᳬरुद्राऽउपश्श्रिताः ।। तेषाᳬसहस्त्रयोजनेवधन्वानितन्मसि ।। नीलग्ग्रीवाःशितिकण्ठाः शर्व्वाऽअधःक्षमाचराः ।। तेषाᳬसहस्रयोजनेवध-न्वानितन्मसि ।। कुण्डस्य कण्ठदेशाऽ[illegible] नीलजीमूतसन्निभः ।। अस्मिन्नावाहये रुद्रं शितिकण्ठं कपालिनम् ।। ॐ भूर्भुवः स्वः कण्ठे रुद्राय नमः रुद्रम् आवा० स्थाप० । भो रुद्र इहागच्छ इह तिष्ठ ।। प्रार्थयेत् -- कण्ठ मङ्गलरूपेण सर्वकुण्डे प्रतिष्ठितः । परितो मेखला त्वत्तो रचिता विश्वकर्मणा ।।

**अथ नाभ्यावाहनम्** -- ॐ नाभिर्म्मेचित्तंव्विज्ञानम्पायुर्म्मेपचितिर्भसत् । आनन्दनन्दावाण्डौमेभगःसौभाग्यसम्पस -- । जङ्घाब्भ्यानम्पद्भ्भयांधर्म्मोस्मि-व्विशिराजाप्रतिष्ष्ठितः ।। पद्माकाराऽथवा कुण्डसदृशाकृतिविभ्रती । आधारः सर्वकुण्डानां नाभिमावाहयाम्यहम् ।। ॐ भूर्भुवः स्वः नाभ्यै नमः नाभिम् आवा० स्थाप० ।। भो नाभे इहागच्छ इह तिष्ठ ।। प्रार्थयेत् -- नाभे त्वं कुण्डमध्ये तु सर्वदेवैः प्रतिष्ठिता । अतस्त्वां पूजयामीह शुभदा सिद्धिदा भव ।।

**अथ कुण्डमध्ये नैर्ऋत्यकोणे वास्तुपुरुषावाहनम्** -- ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवानः ।। यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदे शं चतुष्पदे ।। पा० गृ० ।। आवाहयामि देवेशं वास्तुदेवं महाबलम् । देवदेवं गणाध्यक्षं पातालतलवासिनम् ।। ॐ भूर्भुवः स्वः नैर्ऋत्यकोणे वास्तुपुरुषाय नमः वास्तुपुरुषम् आ० स्था० ।। भो वास्तुपुरुष इहागच्छ इह तिष्ठ ।। ततः प्रार्थयेत् -- यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमङ्गलम् । व्यापिनं भीमरूपञ्च सुरूपं विश्वरूपिणं ।। पितामहस्तं मुख्यं वन्दे वास्तोष्पतिं प्रभुम् ।। वास्तुपुरुष देवेश सर्वविघ्नहरो भव । शान्तिं कुरु सुख देहि सर्वान्कामान्प्रयच्छ मे ।।

एवं कुण्डस्थितान् सर्वान्देवानावाह्यैकतन्त्रेण प्रतिष्ठां कुर्यात् । हस्तेऽक्षतानादाय ।। ॐ मनोजूतिर्ज्जु० -- ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्ताः सर्वे कुण्डस्थदेवाः सुप्रतिष्ठिता वरदा भवेयुः ।। ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः कुण्डस्थदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ।। इति सम्पूज्य । कुण्डाद्बहिः एकस्मिन्पात्रे बलिदानार्थं दध्योदनं संस्थाप्य बलिदानं कुर्यात् ।। हस्ते जलं गृहीत्वा ।। ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः कुण्डस्थदेवेभ्यो नमः अमुं दध्योदनबलिं सम० ।। अनेन विश्वकर्मादिवास्तुपुरुषान्ताः सर्वे कुण्डस्थदेवाः प्रीयन्तां न मम ।

**कुण्डेऽग्निस्थापनम्** -- आचार्यः कश्चिद्विप्रो वा दक्षिणहस्ते दर्भपुञ्जं गृहीत्वोत्थाय पश्चिमतः प्रागन्तं दक्षिणत आरभ्योदक्संस्थं त्रिवारं परिसमूहनं कुर्यात् ।।

दर्भैः परिसमूह्य ।। [ एवं परिसमूहनं विधाय कुण्डाद्बहिः पूर्वस्यामीशान्यां वा दर्भत्यागं कुर्यात् ।। ] दक्षिणहस्तेन गोमयमादाय पूर्ववत् पश्चिमतः प्रागन्तं दक्षिणत आरभ्योदक्संस्थं गोमयेनोपलिंपेत् ।।

[ एव उपलेपनं कृत्वा हस्तं प्रक्षाल्य दक्षिणहस्तेन स्रुवमादाय पूर्ववत् पश्चिमतः प्रागन्तं दक्षिणत आरभ्योदक्संस्थं स्रुवमूलेन त्रिरुल्लेखनं कुर्यात् ।। ]

[ एवमुल्लेखनं कृत्वाऽनामिकाङ्गुष्ठेन पूर्ववत् कुण्डाद्बहिः पांसूनामुद्धरणम् ] ।।

[ एवं त्रिवारं पांसूनामुद्धरणं कृत्वा तान् प्राच्यां क्षिप्त्वा पूर्ववत् न्युब्जपाणिना जलेन त्रिवारम् अभ्युक्षणं कुर्यात् ।। ]

**अथाग्निस्थापनम्** -- स्वकीयगृहादरणीसम्भवाद्वा आनीतम् अन्यताम्रादिपात्रेणाच्छादितं निर्धूमम् अग्निं कुण्डस्य आग्नेय्यां दिशि निधाय आच्छादितं पात्रम् उद्घाट्य "हुँ फट्" इति क्रव्यादांशम् अग्निं नैर्ऋत्यां दिशि परित्यज्य अग्निं कुण्डस्य उपरि त्रिवारं भ्रामयित्वा । ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे । देवाँर ऽआसादयादिह ।। इति मन्त्रं पठन् कुण्डे स्वात्माभिमुखं अग्निं स्थापयेत् ।।

ततोऽग्नौ आवाहनादिमुद्राः प्रदर्शयेत् ।। भो अग्ने त्वम् आवाहितो भव । भो अग्ने त्वं सन्निहितो भव । भो अग्ने त्वं सन्निरुद्धो भव । भो अग्ने त्वं सकलीकृतो भव ।। भो अग्ने त्वम् अवगुण्ठितो भव । भो अग्ने त्वम् अमृतीकृतो भव । भो अग्ने त्वं परमीकृतो भव ।। इति तत्तन्मुद्राः प्रदर्श्य । अग्निं ध्यायेत्- ॐ चत्त्वारिशृङ्गास्त्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य। त्रिधावद्धोव्वृषभोरोरवीतिमहोदेवोमर्त्त्यार ऽआविवेश ।। रुद्रतेजःसमुद्भूतं द्विमूर्धान द्विनासिकम् ।। षण्णेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् । याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् ।। स्रुवं स्रुचञ्च शक्तिञ्च ह्यक्षमालाञ्च दक्षिणे । तोमरं व्यजनं चैव घृतपात्रञ्च वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ।। याम्यायने चतुर्जिह्वं त्रिजिह्वं चोत्तरे मुखम् । द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कालयुतम् । आत्माभिमुखमासीनं ध्यायेच्चैवं हुताशनम् ।। गोत्रमग्नेस्तु शाण्डिल्यं शाण्डिल्यासितदेवलाः । त्रयोऽमी प्रवरा माता त्वरणी वरुणः पिता ।। रक्तमाल्याम्बरधरंरक्तपद्मासनस्थितम् । स्वाहास्वधावषट्कारेरङ्कितं मेषवाहनम् ।। शतमङ्गलनामानं वह्निमावाहयाम्यहम् ।। त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते । आगच्छ भगवन्नग्न कुण्डेऽस्मिन्सन्निधो भव ।। भो वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेतित्रिप्रवरान्वित भूमिमातः वरुणपितः मेषध्वज प्राङ्मुख मम सम्मुखो भव ।। इति ध्यात्वा वाहयेत् । ॐ मनोजूतिर्ज्जु० ।। ।। ॐ शतमङ्गलनामाग्ने सुप्रतिष्ठितो वरदो भव ।। इति प्रतिष्ठाप्य पूजनं कुर्यात् । ॐ भूर्भुवः स्वः शतमङ्गलनाम्ने वैश्वानराय नमः सर्वोपचारार्थ गन्धाक्षतपुष्पाणि सम० । इति कुण्डस्य नैर्ऋत्यकोणे मध्ये वा अग्निं सम्पूज्य प्रार्थयेत् -- अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । हिरण्यवर्णममलं समिद्धं विश्वतोमुखम् ।।

## अथ होमः

ॐ अद्येत्यादे अमुकगोत्रोऽमुकशर्माहं (वर्मा गुप्तो वा) अमुकमन्त्रस्य पाठस्य वा कृतस्य पुरश्चरणस्य दशांशहवनकर्मणि समिच्चरुतिलाज्यादिहविर्द्रव्यं विहितसख्याहुतिपर्याप्तं या या वक्ष्यमाणदेवतास्तस्यैतस्यै देवतायै आहुतिप्रदानं करिष्ये ।

सवसे पहले अग्नि के उत्तर भाग में नीचे लिखे मंत्रों द्वारा मन से प्रजापति का ध्यान करते हुए केवल घी की आहुति दें ।

ॐ प्रजापतये स्वाहा इहं प्रजापतये न मम ।

प्रत्येक मंत्रों में न मम इस वाक्य के द्वारा प्रोक्षणी में घी का अवशिष्ट भाग छोड़ते जायँ ।

अग्नि के दक्षिण भाग में –

ॐ भूः स्वाहा इदमग्नये न मम । ॐ भुवः स्वाहा इदं वायवे न मम । ॐ स्वः स्वाहा इदं सूर्याय न मम ।

इसके बाद आचार्य --

यथा वाणप्रहाराणां कवचं वारणं भवेत् ।<br>
तद्वद्दैवोपघातानां शान्तिर्भवति वारिका ।

शान्तिरस्तु पुष्टिरस्तु यत्पापं रोगम् अकल्याणं तद्दूरे प्रतिहतमस्तु ।

यह पढ़कर यजमान के मस्तक पर अभिषेक करें ।

ॐ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेढो अवयासि सीष्ठाः । यजिष्ठोवह्नतमः शोशुचानो विश्वा द्वेपाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्यां य मम । ॐ स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्याऽउषसो व्युष्टौ । अव यक्ष्वनो वरुणᳬ रराणो व्रीहि मृडीकᳬ सुहवो न एधि स्वाहा । इदमग्नीवरुणाभ्यां न मम । ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्वमित्वमया असि । अया नो यज्ञं वहास्यया नो धेहि भेषजᳬ स्वाहा । इदमग्नये न मम । ॐ ये ते शतं वरुण ये सहस्र यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमᳬ श्रथाय । अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा । इदं वरुणायादित्यायादितये न मम ।

यहाँ यथा वाणप्रहाराणाम् इत्यादि मन्त्र से यजमान के ऊपर जलका अभिषेक करें । यहाँ तक सर्वप्राश्चित संज्ञक वञ्चवारुणी होम पूर्ण हुआ ।

इसके वाद वायव्यकोण में (वाहर में) अग्नि की पूजा कर गणपति आदि देवताओं के निमित्त हवन करने के बाद प्रधान देवता का हवन करें ।

गणेश जी की आहुति अन्वारब्ध के बिना दें, नवग्रह हवन में ग्रहों के लिए अच्छा अलग काष्ठों से हवन करें ।

अर्कः पलाशः खदिरोस्यपामार्गोऽथ पिप्पलः ।

उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ।।

आक, पलाश, खैर, अपामार्ग, (ऊगा) पीपल उदुम्वर, (गूलर) शमी, दूर्वा और कुशायें, नव प्रकार के काष्ठ क्रमशः सूर्य आदि नवग्रहों के लिए हैं ।

इस प्रकार नवग्रह, अधिदेवता, प्रत्यधिदेवता, पञ्चलोकपाल, दशदिक्पाल आदि के हवन हो जाने के वाद प्रधानदेवता का हवन करें । ये सभी मन्त्र नवग्रह पूजाप्रकरण में देखें ।

**प्रधानदेवस्य होम :--**

एवं ग्रहमण्डल-देवता-होमान्तरं प्रधानदेवताध्यानम् प्रणामञ्च कृत्वा चरुपायसाज्यादिभिश्च जपदशांशेन यथाकामं मृग्यादिमुद्रया होमं कुर्यात् । तद्यथा ॐ (मूलमन्त्रः) स्वाहा एवं यथेष्ट होमं कुर्यात् ।

**अथ स्विष्टकृद्धोममन्त्रः** -- ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम ।।

**अथ भूरादिनवाहुतिमन्त्राः** -- ॐ भूः स्वाहा, इदमग्नये न मम ।।१।। ॐ भुवः स्वाहा, इदं वायवे न मम ।।२।। ॐ स्वः स्वाहा, इदं सूर्याय न मम ।।३।।

ॐ त्वन्नो ऽअग्ने ववरुणस्य विद्वान्देवस्य हेडो ऽअव यासिसीष्ठाः ।। यजिष्ठ्ठो वह्नितमः शोशुचानो विश्श्वा द्वेषाᳪसि प्र मुमुग्ध्यस्मत्स्वाहा ।। इदमग्नीवरुणाभ्यां न मम ।।४।।

ॐ स त्वन्नोऽ अग्नेऽवमो भवोती नेदिष्ठ्ठो ऽअस्या ऽउषसो व्युष्टौ ।। अव यक्ष्वनो व्वरुणᳪ रराणो व्वीहि मृडीकᳬ सुहवो न ऽएधि स्वाहा ।। इदमग्नीवरुणाभ्यां न मम ।।५।।

ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया ऽअसि ।। अया नो यज्ञं महास्यया नोधेहि भेषजᳬ स्वाहा ।। इदमग्नये अयसे न मम ।।६।।

ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।। तेभिर्नो ऽअद्य सवितोत विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ।। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ।।७।।

ॐ उदुत्तमं व्वरुण पाशमस्मदवाधम व्विमध्यमᳬ श्रथाय ।। अथाव्वयमादित्यव्व्रते तवानागसोऽ अदितये स्याम स्वाहा ।। इदं वरुणायादित्यादितये नङ्गम ।।८।।

ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम ।।९।।

## बलिदानम्

**अथ एकतन्त्रेण दशदिक्पालबलिदानमन्त्रः** -- ॐ प्राच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्व्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्व्वात्त्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहोर्द्ध्वायै दिशे स्वाहार्व्वाच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहा ।।१।।

ॐ इन्द्रादिदशदिक्पालेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतान् सदीपान् दधिमाषभक्तबलीन् समर्पयामि ।

भो इन्द्रादिदशदिक्पालाः दिशं रक्षत बलिं भक्षत मम सकुटुम्बस्य सपरिवारस्य आयुपकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः वरदा भवत । एभिर्बलिदानैः इन्द्रादयो दशदिक्पालाः प्रीयन्ताम् ।

**अथ एकतन्त्रेण नवग्रहबलिदानमन्त्रः** -- ॐ ग्रहा ऽऊर्ज्जा हुतयो व्यन्तो व्विप्राय मतिम् । तेषां व्विशिप्रियाणां वोऽहमिषमूर्ज्जᳬ समग्रभमुपयामगृहीतोऽसीन्द्राय त्त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्त्वा जुष्टतमम् ।।१।।

सूर्यादिनवग्रहेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवताप्रत्यधिदेवतागणपत्यादिपञ्चलोकपालवास्तोष्पतसहितेभ्यः इमं दधिमाषबलिं समर्पयामि ।

भो सूर्यादिनवग्रहाः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः अदिदेवताप्रत्यधिदेवतासहिता इमं वलिं गृहणीत मम सकुटुम्बस्य सपरिवारस्य आयुः कर्तारः शान्तिकर्तारः तुष्टिकर्तारः पुष्टिकर्तारो वरदा भवत ।

**अथ वास्तुबलिदानमन्त्रः** -- ॐ वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो ऽअनमीवो भवा नः ।। यत्त्वे महे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ।।१।।

ॐ भूर्भुवः स्वः ब्रह्मदिवास्तुमण्डलदेवतासहिताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय वास्तुपुरुषाय इमं सदीपम् आसादितं बलिं समर्पयामि ।

भो भो ब्रह्मादिवास्तुमण्डलदेवतासहितवास्तुपुरुष इमं बलिं गृहाण । मम सकुटुम्बस्य सपरिवारस्य अभ्युदयं कुरु । आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता पुष्टिकर्त्ता तुष्टिकर्त्ता निर्विघ्नकर्त्ता कल्याणकर्त्ता वरदो भव ।

मातृणामप्येकबलिं दद्यात् -- ॐ अम्बे अम्बिके अम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ।

गौर्यादयः षोडशमातरः इमं वलिं गृहणीत आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः तुष्टिकर्त्र्यः पुष्टिकर्त्र्यः वरदा भवत । अनेन वलिदानेन गौर्यादिमातरः पीयन्ताम् ।

**अथ योगिनीबलिदानमन्त्रः** -- ॐ योगेयोगे तवस्तरं व्वाजेबाजे हवा महे ।। सखाय ऽइन्द्रमूतये ।।१।।

भो चतुषष्टीयोगिन्यः वलिं गृहणीत मम सकुटुम्वस्य सपरिवारस्य आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः तुष्टिकर्त्र्यः पुष्टिकर्त्र्यः वरदा भवत । अनेन बलिदानेन चतुःषष्टियोगिन्यः प्रीयन्ताम् ।

**अथ प्रधानदेवताबलिदानमन्त्रः** -- ॐ इदं व्विष्णुर्व्विचक्रमे० अथवा ॐ नमस्ते रुद्र० ।।

## क्षेत्रपालबलिदानम्

एक बांस के पात्र में पत्ता बिछाकर उसमें उड़द, दही, भात और जलपात्र रखकर हलदी, सिन्दूर, कज्जल द्रव्य, पताका चौमुखा दीपक आदि रखने के बाद हाथ में अक्षत, जल पुष्प, पैसे लेकर निम्नलिखित संकल्प बोलें--

ॐ अद्येत्यादि ममः कलारिष्टशान्तिपूर्वकं प्रारब्धकर्मणः साङ्गतासिद्ध्यर्थञ्च क्षेत्रपालपूजनमं बलिदानञ्च करिष्ये ।

**अथ क्षेत्रपालबलिदानमन्त्र** -- ॐ नहि स्पशमविदन्नन्यमस्माद् व्वैश्वामरात्पुर ऽएतारमग्नेः ।। एमेनमव्वृधन्नमृता ऽअमर्त्त्यं व्वैश्वानरं क्षैत्रजित्त्याग देवाः ।।१।।

ॐ क्षेत्रापल महावाहो महावलपराक्रम ।
क्षेत्राणां रक्षाणार्थाय बलिं नय नमोऽस्तुते ।।

ॐ क्षौं क्षेत्रपालाय सांगाय भूतप्रेतपिशाचडाकिशीशाकिनी पिशाचिनीमारीगणवेतालादिपरिवारसहिताय सायुधाय सशक्तिकाय सवाहनाय इमं सचतुर्मुखदीपदधिभक्तबलिं समर्पयामि ।

ऐसा बोलकर प्रार्थना करें --

भो क्षेत्रपाल क्षेत्रं रक्ष वलिं भक्ष मम सकुटुम्वस्य आयुः कर्ता क्षेमकर्ता शान्तिकर्त्ता पुष्टिकर्त्ता तुष्टिकर्त्ता वरदो भव । अनेन वलिदानेन क्षेत्रपालः प्रीयन्ताम् न मम ।

नापित अथवा किसी नौकर आदि के द्वारा वलि को चौरास्ते पर रखवा दें अथ च वलि ले जाने वाले व्यक्ति के पीछे दरवाजे तक जल के छींटें दें और द्यौः शान्ति इत्यादि मन्त्र वोलें ।

**अथ पूर्णाहुतिमन्त्राः** -- ॐ समुद्द्राद्दूर्म्मिर्मधुमाँ २।। उदारदुपा७शुना सममृतत्त्वमानट् ।। घृतस्य नाम गुह्यं स्वस्ति जिह्वा देवानाममृतस्य नाभिः ।।१।।

व्वयं नाम प्रव्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।। उप व्रह्मा +श्रृणवच्छस्यमानं चतु -- श्रृङ्गोऽवमीद् गौर ऽएतत् ।।२।।

चत्वारि शृङ्गा त्रयो ऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य ।। त्रिधा वद्धो व्वृषभो रोरवीति महो देवो मर्त्याँ २।। आविवेश ।।३।।

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।। इन्द्र ऽएक७ सूर्य ऽएकञ्जजान व्वेनादेक७ स्वधया निष्ट्टतक्षुः ।।४।।

एता ऽअर्षन्ति हृद्यात्समुद्राच्छतव्व्रजा रिपुणा नावचक्षे ।। घृतस्य धारा ऽअभिचाकशीमि हिरण्ययो व्वेतसो मध्य ऽआसाम् ।।५।।

सम्यक् स्रवन्ति सरितो न धेना ऽअन्तर्हृदा मनसा पूयमाना: ।। एते ऽअर्षन्त्यूर्म्मयो घृतस्य मृगा ऽइव क्षिपणोरीषमाणा: ।।६।।

सिन्धोरिव प्राद्ध्वने शूघनासो व्वातप्रमिय: पतयन्ति यह्वा: ।। घृतस्य धारा ऽअरुषो न व्वाजी काष्ठा भिन्दन्नूर्म्मिभि: पिन्वमान: ।।७।।

अभिप्रवन्त समनेव योषा: कल्याण्य -- स्मयमानासो ऽअग्निम ।। घृतस्य धारा: समिधो नसन्त न जुषाणो हर्य्यति जातवेदा: ।।८।।

कन्या ऽइव व्वहतुमेतवा ऽउ ऽअञ्ज्यञ्जाना ऽअभिचाकशीमि ।। यत्र सोम -- सूयते यत्र यज्ञो घृतस्य धारा ऽअभि तत्पवन्ते ।।९।।

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्द्रा द्रविणानि धत्त ।। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ।।१०।।

धामन्ते व्विश्वं भुवनमधि श्श्रितमन्त: समुद्रे हृद्यन्तरायुषि ।। अपामनीके समिथे य ऽआभृतस्तमश्याम मधुमन्तन्त ऽऊर्म्मिम् ।।११।।

पुनस्त्वादित्या रुद्द्रा व्वसव: समिन्धतां पुनर्ब्रह्माणो व्वसुनीथ यज्ञै: ।। घृतेन त्वं तन्वं व्वर्धयस्व सत्या: सन्तु यजमानस्य कामा: ।।१२।।

सप्त ते ऽअग्ने समिध -- सप्त जिह्वा: सप्त ऽऋषय: सप्त धाम प्प्रियाणि ।। सप्त होत्रा: सप्तधा त्त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ।।१३।।

मूर्द्धानं दिवो ऽअरतिं पृथिव्या व्वैश्वानरमृत ऽआ जातमग्निम् ।। कवि ँ सम्म्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवा: ।।१४।।

पुर्णा दर्व्वि परापत सुपूर्ण्णा पुनरापत । व्वस्नेव व्विक्क्रीणावहा ऽइषमूर्ज्जं ँ शतक्रतो स्वाहा ।।१५।।

**अथ वसोर्द्धारामन्त्र:** -- ॐ सप्त ते ऽअग्ने समिध -- सप्त जिह्वा: सप्त ऽऋषय: सप्त धाम प्प्रियाणि ।। सप्त होत्रा: सप्तधा त्त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा ।।१।।

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्श्रितो घृतम्वस्य धाम ।। अनुष्वधमावह मादयस्व स्वाहाकृतं व्वृषभ व्वक्षि हव्यम् ।।२।।

अनाधृष्यो जातवेदा ऽअनिष्टृतो व्विराडग्ने क्षत्त्रभृद्दीदिहीह ।। व्विश्वा ऽआशा -- प्प्रमुञ्चन्मानुषीर्भिय: शिवेभिरद्य परि पाहि नो व्वृधे ।।३।।

बृहस्पतये सवितर्बोधयैनꣳ सꣳशितं चित्सन्तराꣳसꣳ शिशाधि ।। व्वर्द्धयैनं महते सौभगाय व्विश्श्व ऽएनमनु मदन्तु देवाः ।।४।।

ॐ इदं व्विष्णुर्विचक्क्रमे त्त्रे धा निदधे पदम् ।। समूढमस्य पाꣳसुरे स्वाहा ।।५।।

इरावती धेनमती हि भूतꣳ सूयवसन्ती मनवे दशस्या ।। व्यस्कभ्ना रोदसी व्विष्णवे ते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहा ।।६।।

ॐ व्विष्णोर्नु कं व्वीर्य्याणि प्रवोचं यः पार्त्थिवानि व्विममे रजाꣳसि ।। यो ऽअस्माकभायदुत्तरꣳ सधस्थं व्विचक्क्रमाणस्त्रे-धोरुगायो व्विष्णवे त्त्वा ।।७।।

दिवो वा व्विष्ण ऽउत वा पृथिव्या महो वा व्विष्ण ऽउरोरन्तरिक्षात् ।। उभा हि हस्ता व्वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्त्वा ।।८।।

प्र तद्विष्णु स्तवते व्वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः ।। यस्योरुषु त्रिपुव्विक्क्रमणेष्वधिक्षियन्ति भुवनानि व्विश्श्वा ।।९।।

व्विष्णो रराटमसि व्विष्णोः श्नप्त्रे स्थो व्विष्णोः स्यूरसि व्विष्णोर्द्ध्रुवोऽसि ।। व्वैष्णवमसि व्विष्णवे त्त्वा ।।१०।।

ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्त्रधारम् ।। देवस्त्त्वा सविता पुनातु व्वसोः पवित्त्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा ।।११।।

**अथ कुण्डाग्नेः प्रदक्षिणामन्त्रः** -- ॐ अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव व्ययुनानि विद्वान् ।। यु योद्ध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं व्विधेम ।।

**अथाग्नेः स्तुतिश्लोका :--**

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृपीकेश महापुरुषपूर्वज ।।१।।
देवानां दानवानां च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ।।२।।
एकस्त्त्वमसिलोकस्य स्रष्टा संहारकस्त्तथा ।
अध्यक्षश्चानुमन्ता च गुणमाया समावृतः ।।३।।

संसारसागरं घोरमतन्तक्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥४॥
न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथापि पुरुपाकारो भक्तानां त्वं प्रकाशसे ॥५॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः ॥६॥

**अथ भस्मधारणमन्त्रः** -- ॐ त्रयायुपं जमदग्नेरिति ललाटे । कस्य पश्य त्र्यायुषमिति कंठ । अगस्तस्य त्र्यायुषं इति नाभौ । यद्दे वानां त्र्यायुपं इति दक्षिण स्कंधे तन्नो अस्तु त्रयायुपमिति वामस्कंधे । शतायुषं मिति शिरसि (यद्देवेषु त्र्यायुषमिति दक्षिणांसे । तन्नो ऽअस्तु त्रयायुषमिति हृदि ।)

**अथ देवानामुत्तरपूजने सूक्तनिर्णयः** -- विष्णुयागे पुरुप सूक्तेन रुद्रयागे रुद्रसूक्तेन पोडशोपचारैः देवानां पूजनं कर्त्तव्यम् ।

**अथ आरातिक्यमन्त्राः** -- ॐ ये देवासो दिव्येकादश स्थ पृथिव्याम-ध्येकादश स्थ ॥ अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषद्ध्वम् ॥

ॐ इद७ हविः प्रजननं मे ऽअस्तु दशवीर७ सर्व्वगण७ स्वस्तये ॥ आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ॥ अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो ऽअस्मासु धत्त ॥

ॐ आ रात्रि पार्थिव७ रज -- पितुरप्रायि धामभिः ॥ दिवः सदा७सि बृहती वि तिष्ठस ऽआ त्वेषं व्वर्त्तते तम -- ॥

ॐ अग्निर्द्देवता व्वातो देवता सूर्य्यो देवता चन्द्रमा देवता व्वसवो देवता रुद्रा देवताऽऽदित्या देवता मरुतो देवता व्विश्वे देवा देवता बृहस्पतिर्द्देवतेन्द्रो देवता व्वरुणो देवता ॥

ॐ कर्पूरगौर करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥

**अथ पुष्पाञ्जलिमन्त्राः** -- ॐ यज्ञेन यज्ञम यजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ ते ह नाकं महिमान -- सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॥

ॐ राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय कर्महे । ग

मे कामामं कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ॥

ॐ स्वस्ति । साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौम सार्वायुष आन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति ॥

तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आवी क्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥

ॐ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ॥ सं बाहुभ्यां धम ति सम्पतत्रै र्द्यावाभूमी जनयन्देव ऽएक + ॥

अथाभिषेकमन्त्राः -- ॐ देवस्य त्त्वा सवितुः प्रसवेऽश्विनोर्वाहुभ्यां पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै व्वाचो यन्तुर्यन्त्रियें दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥१॥

ॐ शिरो मे श्रीर्य्यशो मुखं त्त्विषिः केशाश्च श्मश्श्रूणि ॥ राजा मे प्प्राणोऽअमृतꣳ सम्म्राट् चक्षुर्व्विराट् श्श्रोत्त्रम् ॥२॥

जिह्वा मे भद्रं व्वाङ्महो मनो मन्युꣳ स्वराड् भाम + ॥ मोदा + प्प्रमोदा ऽअङ्गुलीरङ्गानि मित्रं मे सह + ॥३॥

बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म्म व्वीर्य्यम् ॥ आत्मा क्षत्त्रमुरो मम ॥४॥

पृष्ठीर्म्मे राष्ट्रमुदरमꣳ सौ ग्रीवाश्च श्श्रोणी । ऊरू ऽअरत्नी जानुनी व्विशो मेऽङ्गानि सर्व्वत + ॥५॥

नाभिर्म्मे चित्तं विज्ञानं पायुर्म्मेऽपचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पस -- ॥ जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि व्विशि राजा प्प्रतिष्ठितः ॥६॥

ॐ पय + पृथिव्यां पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः प्प्रदिश + सन्तु मह्यम् ॥७॥

ॐ पञ्च नद्य + सरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥८॥

ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनी स्थो व्वरुणस्य ऽऋतसदन्यसि व्वरुणस्य ऽऋतसदनमसि व्वरुणस्य ऽऋतसदनमासीद ॥९॥

ॐ पुनन्तु मा पितर -- सोम्यास -- पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।। पवित्त्रेण शतायुपा ।। पुनन्तु मा पितामहाः पुनस्त प्रपितामहाः ।। पवित्त्रेण शतायुपा विश्वमायुर्व्यश्नवै ।।१०।।

पुनन्तु मा देवजनाः पुनन्तु मनसा धिय + । पुनन्तु व्विश्वा भूतानि जातवेदः पुनीहि मा ।।११।।

ॐ व्विश्वानि देव सवितुऽर्दुरितानि परासुव ।। यद् भद्द्रं तन्न ऽआ सुव ।।१२।।

ॐ आपो हि ष्ठा मयोभुवस्तान ऽऊर्ज्जे दधातन ।। महे रणाय चक्षसे ।।१३।।

वो व – शिवतमो रसस्तस्य भाजयतेह न+ ।। उशतीरिव मातर+।।१४।।

तस्था ऽअरं गमाम वो यस्य क्षयाय जिन्वथ ।। आपो जनयथा च नः ।।१५।।

ॐ द्यौः शान्तिरन्तरिक्ष७ शान्ति + पृथिवी शान्तिरापः शान्तिरोपधयः शान्ति + ।। व्वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व्व७ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।।१६।।

ॐ यतोयत, समीहसे ततो न ऽअभयं कुरु ।। शन्नं + कुरु प्रजाब्भ्योऽभयं नः पशुब्भ्यः + ।।१७।।

❏❏❏

## अथ अवभृथस्नानविधिः ।

यजमानः पूर्णाहुत्यनन्तरं पूर्णपात्रादिदानानन्तरं प्रधानवेद्युपरि स्थापितं प्रधानकलशं, हवनकुण्डाद् वहिः पतितं हवनीयद्रव्यं, स्रुक् -- स्रुवादियक्षपात्रं पूजनसामग्री च गृहीत्वा वेदमन्त्रोच्चारण-भगवन्नामकीर्त्तन-वाद्यघोपपुरस्सरं आचार्यादिऋत्विग्भिः नगरवासिभिश्च सह नदी जलाशयं वा गच्छेत् । अर्धमार्गोपरि क्षेत्रपालं सम्पूज्य क्षेत्रपालाय वलिंदद्यात् । नदी जलाशयं वा गत्वा आचार्यादय ऋत्विजः स्वस्तिवाचनं कुर्युः । पश्चाद् यजमानः संकल्पं कुर्यात् । तद्यथा --

देशकालौ सङ्कीर्त्य ''मम सर्वेपां परिवाराणां तथान्येपां समुपस्थितानां अवानाञ्च सर्वविधकल्याणपूर्वकं धर्मार्थकाममोक्ष-चतुर्विधपुरुपार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीतिपूर्वकं च कृतस्य अमुकयागकर्मणः साङ्गतासिद्ध्यर्थ तत्सम्पूर्ण

फलप्राप्त्यर्थं च पुण्यकालेऽस्मिन् अस्यां नद्यां जलाशये वा माङ्गलिके अवभृथस्नानं समस्तसमुपस्थितजनैः सहाहं करिष्ये ।

अनन्तरं नद्यां जलाशये वा जलमातृणामावाहनं पूजनञ्च कुर्यात् ।

तद्यथा--

मत्स्यै नमः, मत्सीमावाहयामि स्थापयामि । कूर्म्यै नमः, कूर्मीमावा० । वाराह्यै नमः वाराहीमावा० । दर्दुर्यै नमः, ददुरीमावा० । मकर्यै नमः, मकरीमावा० । जलूक्यै नमः, जलूकीमावा० । तन्तुक्यै नमः, तन्तुकीमावा० ।

**ततो वरुणमावाहयेत् --**

आगच्छ जलदेवेश जलनाथ पयस्पते ।
तव पूजां करिष्यामि कुम्भेऽस्मिन् सन्निधिं कुरु ॥

इत्यावाह्य सम्पूज्य च,

श्वेताभ्र शिखिराकार सर्वभूतहिते रतः ।
गृहाणार्घ्यमिमं देव जलनाथ नमोऽस्तु ते ॥

**इति विशेषार्घ्यं दद्यात् । ततः --**

ॐ इमं मे व्वरुण श्श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥१॥

ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो व्वरुणेह बोद्ध्युरुशꣳस मान ऽआयुः प्रमोषी ॥२॥

ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान् देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमꣳ, शोशुचानो व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥३॥

ॐ सत्वन्नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ । अव यक्ष्वनो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवो न ऽएधि ॥४॥

ॐ मापो मौषधीर्हिꣳसीर्द्धाम्नो धाम्नो राजँस्ततो व्वरुण नो मुञ्च । यदाहुरघ्न्या ऽइति व्वरुणेति शपामहे ततो व्वरुणनो मुञ्च ॥५॥

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं व्विमध्यमꣳ श्श्रथाय । अथा व्वयमादित्य व्व्रते तवानागसो ऽअदितये स्याम ॥६॥

ॐ मुञ्चन्तु मा शपथ्यादथो व्वरुण्यादुत । अथो यमस्य पड्वीशात् सर्व्वस्माद्देवकिल्विषात् ॥७॥

ॐ अघभृथ निचुम्पुण निचेरूरसि निचुम्पुणः । अथ देवैर्देवकृतमेनो यासिषमवमर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पाहि ॥

इति मन्त्रैः सम्प्रार्थ्य स्रुवरेखया तीर्थप्रकल्पनं कुर्यात् ।

ब्रह्माण्डोदरतीर्थानि चाकृष्याङ्कुशमुद्रया ।

तेन सत्येन मे देव तीर्थं देहि दिवाकर ।।

इति रज्वादिना परितश्चतुरस्रं स्नानार्थं व्यवस्थां प्रकल्पयेत् । तत :-

ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः ।

सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ।।

इति मन्त्रेणं नदी जलाशयं वा सम्पूज्य ततो लाजादिना जीवमातृणां बलिं दद्यात् । तद्यथा --

कुमार्यै नमः । धनदायै नमः । नन्दायै नमः विमलायै नमः । मङ्गलायै नमः । अचलायै नमः । पद्मायै नमः ।

पश्चात् विष्णुयागे पुरुक्सूक्तेन, रुद्रयागे रुद्रसूक्तेन, लक्ष्मीयागे श्रीसूक्तेन च जले अभिषेकः कार्यः । ततो होमावसरे हवनकुण्डाद् बहिः पतितं हवनीयद्रव्यं नद्यां जलाशये वा तूष्णीं प्रक्षिपेत् ।

ततो जले 'वडवाग्निरूपायाग्नये नमः' इति मन्त्रेण षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य द्वादश आज्याहुतीर्जुहुयात् । तद्यथा --

ॐ अद्भ्यः स्वाहा, इदमद्भ्यो न मम ।

ॐ वार्भ्यः स्वाहा, इदं वार्भ्यो न मम ।।

ॐ उदकाय स्वाहा, इदमुदकाय न मम ।

ॐ तिष्ठन्तीभ्यः स्वाहा, इदं तिष्ठन्तीभ्यो न मम ।।

ॐ स्रवन्तीभ्यः स्वाहा, इदं स्रवन्तीभ्यो न मम ।

ॐ स्यन्दमानाभ्यः स्वाहा, इदं स्यन्दमानाभ्यो न मम ।।

ॐ कूप्याभ्यः स्वाहा, इदं कूप्याभ्यो न मम ।

ॐ सूद्याभ्यः स्वाहा, इदं सूद्याब्यो न मम ।।

ॐ धार्याभ्यः स्वाहा, इदं धार्याभ्यो न मम ।

ॐ अर्णवाय स्वाहा, इदमर्णवाय न मम ।।

ॐ समुद्राय स्वाहा, इदं समुद्राय न मम ।

ॐ सरिराय स्वाहा, इदं सरिराय न मम ।।

ततो यजमानः सम्पूजितेन प्रधानकलशोदकेन -- ॐ इमं मे० । ॐ

तत्त्वा यामि० । ॐ त्वन्नो ऽअग्ने व्यरुणस्य० । ॐ सत्वन्न ऽअग्ने वमः० । ॐ उदुत्तमम्० । इति वारुणमन्त्रैः स्नानं कुर्यात् । ततः प्रधानकलशोदकेन कुशैः दुर्वाङ्कुरैश्च अन्येषां जनानां सम्मार्जनं कारयेत् ।

अस्वाद् यजमानः यज्ञकुण्डादानीतेन भस्मना स्रुचिस्थितेन आज्येन च शरीरे अनुलेपनं कृत्वा नद्यां जलाशये वा स्नानं कुर्यात् । स्नानानन्तरं नूतनवस्त्राणि परिधाय तिलकाद्यलङ्करणं कुर्यात् । ततो यजमानः --

ॐ हᳬ सः शुचिषद् वसुरन्तरिक्षसद्धोता व्वेषिदतिथिर्द्दु रोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऽऋतजा ऽअद्रिजा ऽऋतं बृहत् ॥

**इति मन्त्रेण सूर्योपस्थानं कृत्वा तीर्थदेवतां सम्पूज्य प्रार्थयेत् --**

ॐ हिरण्यश्रृङ्गोऽयो ऽअस्य पादा मनोजवा ऽअवर ऽइन्द्र ऽआसीत् ।
देवा ऽइदस्य हविरद्यमायन्यो ऽअर्व्वन्तं प्रथमो ऽअद्ध्यतिष्ठत् ॥१॥
ईर्म्मान्तासः सिलिकमद्ध्यमासः सᳬ० शूरणासो दिव्यासो ऽअत्त्याः ।
हᳬ सा ऽइव श्श्रेणितो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥
तव शरीरं पतयिष्ण्वर्व्वन् तव चित्तं व्वात ऽइवद् ध्रजीमान् ।
तव श्शृङ्गाणि व्विष्ठिता पुरुत्त्रारण्येषु जर्ब्भुराणा चरन्ति ॥

ततो यजमानः आचार्यादिभ्यो ब्राह्मणेभ्यो दक्षिणां दद्यात् । पश्चात् प्रधानकलशं पूजादिसामग्रीं च गृहीत्वा भगवन्नामकीर्तनं कुर्वन् आचार्यादिऋत्विग्भिः सह सपत्नीको यजमानः यज्ञस्थलमागत्य हस्तौ पादौ च प्रक्षाल्ययज्ञमण्डपस्य प्रदक्षिणां कृत्वा यज्ञमण्डपस्य पूवद्वारेण प्रविशेत् । ततः प्रधानकलशं प्रधानवेद्युपरि स्थापयेत् । पश्चात् यज्ञावशिष्ठं कर्म समापयेदिति ।

**इति अवभृथस्नानविधिः ।**

## अथ जलयात्राविधिः --

यज्ञप्रारम्भदिने यजमानः पूजासामग्री गृहीत्वा आचार्यादिऋत्विजां वरणानन्तरं पूजासामग्रीं वेदमन्त्रोच्चारण-भगवन्नामकीर्तन-वाद्यघोषपुरस्सरं आचार्यादिऋत्विग्भिः नगरवासिभिः सुवासिनीभिश्च सह नदी जलाशयं वा गच्छेत् । नद्यां जलाशये वा गत्वा प्राङ्मुख उदङ्मुखो वा उपविश्य यजमानः सङ्कल्पं कुर्यात् । तद्यथा --

देशकालौ सङ्कीर्त्य करिष्यमाणस्य अमुकयागकर्मणः निर्विघ्नतासिदध्यर्थं वरुणदेवताप्रीत्यर्थं वरुणदेवस्य पूजनमहं करिष्ये ।।

इति सङ्कल्प्य, जलसमीपे रक्ताक्षतैः पीताक्षतैर्वा नव कोष्ठान् निर्माय तेपु दिक्षु-विदिक्षु अष्टौ कलशान् संस्थाप्य, मध्ये कलशमेकं संस्थापयेत् । अनन्तरं तेपु सर्वेषु कलशेषु जलं परिपूर्य तेषां गन्धाक्षतपुष्पादिना पूजनम् । ततः तत्रैव पट्टवस्त्रे पङ्क्तित्रये सप्त-सप्त अक्षतपुञ्जान् विधाय तेपु क्रमेण जलमातृणां जीवमातृणां स्थलमातृणाञ्च आवाहनं स्थापनं पूजनञ्च कुर्यात् ।

## अथ जलमातृणां पूजनम् --

मत्स्यै नमः, मत्सीमावाहयामि स्थापयामि । कूर्म्यै नमः, कूर्मीमा० । वाराह्यै नमः, वाराहीमा० । दर्दुर्यै नमः, दर्दुरीमा० । मकर्यै नमः, मकरीमा० । जलूक्यै नमः, जलूकीमा० । तन्तुक्यै नमः, तन्तुकीमा० ।

'मत्स्यादिजलमातृभ्यो नमः' इति पञ्चोपचारैः पूजयेत् ।

## अथ जीवमातृणां पूजनम् --

कुमार्यै नमः, कुमारीमावाहयामि स्थापयामि । धनदायै नमः, धनदामा० । नन्दायै नमः, नन्दामा० । विमलायै नमः, विमलामा० । मङ्गलायै नमः, मङ्गलामा० । अचलायै नमः अचलामा० । पद्मायै नमः, पद्मामा० ।

'कुमार्यादिजीवमातृभ्यो नमः' इति पञ्चोपचारैः पूजयेत् ।

## अथ स्थलमातृणां पूजनम् --

ऊर्म्यै नमः, ऊर्मीमावाहयामि स्थापयामि । लक्ष्म्यै नमः लक्ष्मीया० । महामायायै नमः, महामायामा० । पानदेव्यै नमः, पानदेवीमा० । वारुण्यै नमः, वारुणीमा० । निर्मलायै नमः, निर्मलामा० । गोधायै नमः, गोधामा० ।

'कुमार्यादिजीवमातृभ्यो नमः' इति पञ्चोपचारैः पूजयेत् ।

पश्चात् हकसु दिक्षु दक्षदिक्पालानां पूजनम् । ततः नद्यां जलाशये वा नदीस्तीर्थापि चावाहयेत् ।

काशी कुशस्थली मायाऽवन्त्यबोध्या मधोः पुरी ।
शालिग्रामः सगोकर्णो नर्मदा च सरस्वती ।।१।।
आगच्छन्तु सरिज्ज्येष्ठा गङ्गा पापप्रणाशिनी ।
नीलोत्पलाकश्यामा पद्महस्ताम्बुजेक्षणा ।।२।।

आयातु यमुना देवी कूर्मयानस्थिता सदा ।
प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा ।।३।।
ऊर्मिला चन्द्रभागा च सरयू गण्डकी तथा ।
वितस्ता च विपाशा च नर्मदा च पुनः पुनः ।।४।।
कावेरी कौशिकी चैव गोदावरी महानदी ।
मन्दाकिनी वसिष्ठा च तुंगभद्रा शशिप्रभा ।।५।।
अमरेशः प्रभासश्च नैमिषं पुष्करं यथा ।
कुरुक्षेत्रं प्रयागं त गंगासागरसंगमम् ।।६।।
एतां नद्यश्च तीर्थानि यानि सन्ति महीतले ।
तानि सर्वाणि आयान्तु पावनार्थ द्विजन्मनाम् ।।७।।

इति नदीनां तार्थानाञ्चावाहनं कृत्वा 'गंगादिनदीभ्यो नमः' 'पुष्करादितीर्थेभ्यो नमः' इति पञ्चोपचारैः पूजनं कुर्यात् । ततः जलमध्ये वरुणदेवस्य पूजनम् । हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा 'ॐ इमं वरुणरश्रुधा'० इत्यनेन मन्त्रेण वरुणं सम्पूज्य जले 'ॐ पञ्च नद्यः'० इति मन्त्रेण पञ्चामृतस्य प्रक्षेपः । परस्याम् जले द्वादश आज्याहुतीर्जुहुवान् । तद्यथा --

ॐ अद्भ्यः स्वाहा । ॐ वार्भ्यः स्वाहा । ॐ उद्काय स्वाहा । ॐ तिष्ठन्तीभ्यः स्वाहा । ॐ स्रवन्तीभ्यः स्वाहा । ॐ स्यन्दमानाभ्यः स्वाहा । ॐ कूप्याभ्यः स्वाहा । ॐ सूद्याभ्यः स्वाहा । ॐ धार्याभ्यः स्वाहा । ॐ अर्णवाय स्वाहा । ॐ समुद्राय स्वाहा । ॐ सरिराय स्वाहा ।

(शु० य० २२।२५)

अथवा 'ॐ अद्भ्यः सम्भृतः०'' इत्यादिमन्त्रैः धृतेन दध्ना वा स्रुवेण विंशतवारं आहुतीर्दद्यात् ।

ततोऽर्घपात्रे जलेन साकं गन्धाक्षतपुष्पाणि गृहीत्वा नद्यां जलाशये वा वारत्रयमर्घ्यं दद्यात् । पश्चात् नद्यां श्रीफलं प्रक्षिपेत् । ततोदेवानां विसर्जनं कृत्वा आचार्यादिऋत्विजां सुवासिनाञ्च पूजनं विधाय च दद्यात् । पश्चात् पूजितान् नवकलशान् उत्थाप्य नवसंख्यानां सुवासिनीनां मस्तकोपरि धारयेत् । ततो यजमानः वेदमन्त्र भगवन्नामकीर्तनं कुर्वन् आचार्यादिऋत्विग्भिः सह यज्ञस्थलं प्रति गच्छेत् । अर्धमार्गे स्थित्वा इन्द्रादिदशदिक्पालानां क्षेत्रपालस्य

च आवाहनं पूजनं च कृत्वा सर्वेभ्यः वलिं दद्यात् । ततो यज्ञमण्डपस्य पश्चिमद्वारस्य पूजनं विधाय तेनैव द्वारेण मण्डपे प्रविश्य पूजितनवकलशान् यज्ञमण्डपस्य वारुणमण्डलोपरि स्थापयेदिति ।

इति जलयात्राविधिः ।

□□□

## बलिवैश्वदेव-विधिः

पवित्र आसन पर पूर्वाभिमुख बैठकर सर्वप्रथम आचमन और प्राणायाम करें । पश्चात् निम्नांकित मन्त्र से अपने दाएँ हाथ की अनामिका अंगुली में कुश की पवित्री धारण करें --

ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्व्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ।।

नीचे लिखे मन्त्र से अपने को पवित्र करें --

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ।।

निम्नांकित संकल्प करें --

देशकालौ संकीर्त्य गोत्रः शर्माऽहं (वर्माऽहम्, गुप्तोऽहम्) मम गृहे कण्डनीपेपणी-चुल्ली-सम्मार्जनी - गृहलेपनादि-हिंसाजन्य-दोषपरिहारपूर्वकोत्र-शुद्ध्यात्मसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वलिवैश्वदेवकर्म करिष्ये ।

लौकिक अग्नि प्रज्वलित करके अग्निदेव का निम्नांकित मन्त्र पढ़ते हुए ध्यान करें --

ॐ चत्वारि श्रृङ्गा त्रयो ऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य ।
त्रिधा वद्धो वृपभो रोरवीति महो देवो मर्त्यो ऽआविवेश ।।
(शु० य० १७।९१)

'इस अग्निदेव के चार सींग, तीन पैर, दो सिर और सात हाथ हैं । कामनाओं की वर्षा करनेवाला यह महान् देव तीन स्थानों में बँधा हुआ शब्द करता है और प्राणियों के भीतर जठरानलस्य से प्रविष्ट है ।'

फिर नीचे लिखे. मन्त्र को पढ़कर अग्निदेव को मानसिक आसन दें --

ॐ एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जात. स ऽउ गर्भे ऽअन्तः ।
स ऽएव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ।।
(शु० प० ३२-४)

□□□

'यह अग्निस्वरूप परमात्मदेव ही सम्पूर्ण दिशा-विदिशाओं में व्याप्त है, यही हिरण्यगर्भरूप से सबसे प्रथम उत्पन्न (प्रकट) हुआ था, माता के गर्ण में यही रहता है और यही उत्पन्न होने वाला है, हे मनुष्यो ! यही सर्वव्यापक और सब ओर मुखों वाला है ।'

पश्चात् अग्निदेव को नमस्कार करके घर में बने हुए बिना नमक के पाक को अथवा घृताक्त कच्चे चावल को एक पात्र में रख लें और यज्ञोपवीत को सव्य कर अन्न की पाँच आहुतियाँ नीचे लिखे पाँच मन्त्रों को क्रमशः पढ़ते हुए वारी-वारी से अग्नि में छोड़ें । (अग्नि के अभाव में एक पात्र में जल रखकर उसी में आहुतियाँ छोड़ सकते हैं ।)

## (१) देवयज्ञ

| १ | २ |
|---|---|
| ५ | अस्ति |
| ४ | ३ |

१ ॐ ब्रह्मणे स्वाहा, इदं ब्रह्मणे न मम ।

२ ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम ।

३ ॐ गृह्याभ्यः स्वाहा, इदं गृह्याभ्यो न मम ।

४ ॐ कश्यपाय स्वाहा, इद कश्यपाय न मम ।

५ ॐ अनुमतये स्वाहा, इद मनुमतये न मम ।

पुनः अग्नि के पास ही पानी से एक चौकोना चक्र वनाकर उसका द्वार पूर्व की ओर रखे और उसी में बतलाये जाने वाले स्थानों पर क्रमशः बीस ग्रास अन्न देना चाहिये । जिज्ञासुओं की सुविधा के लिये नकशा और ग्रास अर्पण करने के मंत्र नीचे दिये जाते हैं । नकशे में केवल अंक रखा गया है, इसमें जहाँ एक है वहाँ प्रथम ग्रास और दो की जगह दूसरा ग्रास देना चाहिये । इसी प्रकार तीन से चलकर बीस तक क्रमशः निर्दिष्ट स्थान पर ग्रास देना चाहिये । नकशे के नीचे क्रमशः बीस मंत्र दिये जाते हैं, एक-एक मंत्र पढ़कर एक-एक ग्रास अर्पण करना चाहिये ।

**(२) भूतयज्ञ** -- यज्ञोपवीत को सव्य करके पके हुए अन्न के सत्रह ग्रास अंकित मण्डल में यथायोग्य स्थान पर नीचे लिखे हुए मन्त्रों द्वारा क्रमशः छोड़ दें ।

१ ॐ धात्रे नमः, इदं धात्रे न मम । २ ॐ विधात्रे नमः, इदं विधात्रे न मम । ३ ॐ वायवे नमः, इदं वायवे न मम । ४ ॐ वायवे नमः, इदं वायवे न मम । ५ ॐ वायवे नमः, इदं वायवे न मम । ६ ॐ वायवे नमः, इदं वायवे न मम । ७ ॐ प्राच्यै नमः, इदं प्राच्यै न मम । ८ ॐ अवाच्यै नमः, इदमवाच्यै न मम । ९ ॐ प्रतीच्यै नमः, इदं प्रतीच्यै न मम । १० ॐ उदीच्यै नमः, इदमुदीच्यै न मम । ११ ॐ ब्रह्मणे नमः, इदं ब्रह्मणे न मम । १२ ॐ अन्तरिक्षाय नमः, इदमन्तरिक्षाय न मम । १३ ॐ सूर्याय नमः, इदं सूर्याय न मम । १४ ॐ विश्वेभ्यो देवेभ्यो नमः, इदं विश्वेभ्यो देवेभ्यो न मम । १५ ॐ विश्वेभ्यों भूतेभ्यो नमः, इदं विश्वेभ्यां भूतेभ्यो न मम । १६ ॐ उपसे नमः, इदमुपसे न मम । १७ ॐ भूतानां पतये नमः, इदं भूतानां पतये न मम ।

**(३) पितृयज्ञ** -- यज्ञोपवीत को अपसव्य करके वाएँ घुटने को पृथ्वी पर रखकर दक्षिण की ओर मुख करके हो सके तो साथ में तिल लेकर, पक्क अन्न अंका मण्डल में निर्दिश्ट स्थान पर मन्त्र पढ़कर रख दें ।

१८ ॐ पितृभ्यः स्वधा नमः, इदं पितृभ्यः स्वधा न मम ।

**निर्णजनम्** -- यज्ञोपवीत को सव्य करके अन्न के पात्र को धोकर वह जल अंकित मण्डल में १९वें अंक की जगह मन्त्र पढ़कर छोड़ दें ।

१९ ॐ यक्ष्मैतत्ते निर्णजनं नमः, इदं यक्ष्मणे न मम ।

**(४) मनुष्ययज्ञ** -- यज्ञोपवीत को माला की भाँति कण्ठ में करके उत्तराभिमिख हो पक्क अन्न अंकित मण्डल में २०वें अंक की जगह मन्त्र द्वारा छोड़ दें ।

२० ॐ हन्त ते सनकादिमनुष्येभ्यो नमः, इदं हन्त ते सनकादि मनुष्येभ्यो न मम ।

**(१) गोबलि** -- इसके बाद निम्नांकित मन्त्र पढ़ते हुए सव्य भाव से ही गौओं के लिये बलि अर्पण करें ।

ॐ सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ।। इदमन्नं गोभ्यो न मम ।।

**(२) श्वानबलि** -- यज्ञोपवीत को कण्ठ में माला की भाँति करके कुत्तों के लिये ग्रास दें ।

ॐ द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।।

ताभ्यामन्नं प्रदास्यामि स्यातामेतावहिंसकौ ।।

इदमन्नं श्वभ्यां न मम ।

**(३) काकबलि** -- पुनः यज्ञोपवीत को अपसव्य करके नीचे लिखे मन्त्र को पढ़ते हुए काग के लिये भूमिपर ग्रास दें ।

ॐ ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ।

वायसाः प्रतिगृण्हन्तु भूमौ चाऽन्नं मयार्पितम् ।।

इदमन्नं वायसेभ्यो न मम ।

**(४) देवादिबलि** -- सव्यभाव से निम्नांकित मन्त्र पढ़कर देवता आदि के लिये अन्न अर्पण करें ।

ॐ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसङ्घाः ।

प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् ।।

इदमन्नं देवादिभ्यो न मम ।

**(५) पिपीलिकादिबलि** -- इसी प्रकार निम्नांकित मन्त्र से चींटी आदि के लिये अन्न दें ।

ॐ पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मनिबन्धबद्धाः ।

तेषां हि तृप्त्यर्थमिदं मयाऽन्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ।

इदमन्नं पिपीलिकादिभ्यो न मम ।

तदनन्तर हाथ धोकर भस्म लगावें और निम्नांकित मन्त्र से अग्नि का विसर्जन करें ।

ॐ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा ।

एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा ।।

(शु. य. ८ । २२)

अनेन बलिवैश्वदेवाख्येन कर्मणा परमेश्वरः प्रीयतां न मम ।

ॐ विष्णवे नमः । ॐ विष्णवे नमः । ॐ विष्णवे नमः ।

# सप्तशती-पूजन-यन्त्रम्

## आदौ सर्वत्र प्रणवो योजनीयः

वामभागे ॐ मं महिपाय नमः तथा च दक्षिणभागे ॐ सिं सिंहाय नमः लेखनीयम् । यन्त्र निर्माणे --

मध्ये विन्दुं त्रिकोणं च षट्कोणं च ततोन्यसेत् ।<br>
तस्योपरि च वृत्तेऽष्टौ दलानि विलिखेद् बुधः ॥<br>
तस्योपरि यद् वृत्तं चतुर्विंशतिपत्रकम् ।<br>
तद् बाह्यो चतुर्द्वारं चतुरस्त्रत्रयं ततः ॥

## देवीमूर्तिस्थापने शक्त्याराधनायै गौरीतिलकमण्डलम् विधातव्यम्

लिङ्गतो हि शिवार्चायां सर्वतोविष्णुपूजने ।
शक्त्यर्चायां तथा कार्यं गौरीतिलकमण्डलम् ।।

### गौरीतिलकमण्डलम्

प्राच्योदीच्या: कृता रेखा अष्टादशौवाष्टादश --
पदेषु स्थापयेत् देवान्नवाशीतिशतद्वयम् ।।

# श्रीगणेशाथर्वशीर्षम्

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्त्ताऽसि । त्वमेव केवलं धर्त्ताऽसि । त्वमेव केवलं हर्त्ताऽसि । त्वमेव सर्वं खल्विदं ब्रह्माऽसि । त्वं साक्षादात्माऽसि नित्यम् । ऋतं वच्मि । सत्यं वच्मि । अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दोऽद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि । सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति ।। सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक् पदानि ।। त्वं गुणत्रयातीतः । त्वमवस्थात्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनोध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः स्वरोम् । गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः सन्धानम् । संहिता सन्धिः सैषा गणेशविद्या । गणक ऋषिः निचृद्गायत्री छन्दः । गणपतिर्देवता ॐ गं गणपतये नमः । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् । एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् रदञ्च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्त लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् । भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतञ्च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् । एवं ध्यायति तो नित्यं स योगी योगिनां वरः । नमो व्रातपतये, नमो गणपतये नमः प्रथमपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्त्तये नमः ।

**फलश्रुतिः** -- एतदथर्वशीर्षं योऽधीते । स ब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्न बाध्यते । स पञ्चमहापापात्प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीमानो रात्रिकृतं पापं नाशयति । सायम्प्रातः प्रयुञ्जानो अपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति । धर्मार्थकाममोक्षञ्च विन्दति । इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद्दास्यति स पापीयान् भवति ।

सहस्त्रावर्त्तनाद्यं यं यं काममधीते तं तमनेन साधयेत् । अनेन गणपतिममिविञ्चति स वाग्मी भवति । चतुर्थ्यामनशनञ्जपति स विद्यावान् भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति ।

**यजनार्थमाह** -- यो दूर्वांकुरैर्यजति स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान् भवति, स मेधावान् भवति । यो मोदकसहस्त्रेण यजति स वाञ्छितफलमवाप्नोति । यः साज्यसमिदिभर्यजति स सर्व लभते । स सर्व लभते ।

**अन्यप्रयोगार्थमाह** -- अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रों भवति । महाविध्नात्प्रमुच्यते । महादोषात्प्रमुच्यते । महाप्रत्यवायात्मुच्यते स सर्वविद्भवति । स सर्वविद्भवति ।। य एवं वेद । इत्युपनिष् ।। ॐ शान्तिः शान्तिः शान्तिः ।। इति गणेशाथर्वशीर्षम् ।।

## चतुष्षष्टि योगिनी-चक्र

# गौरीतिलकमण्डलस्थलदेवानां स्थापनं पूजनम् च

ममेह जन्मानि जन्मान्तरे वा श्री दुर्गादेवीप्रीति द्वारा सर्वपापक्षय पूर्वकदीघायुर्विपुल-धनधान्य पुत्रपौत्राद्यवच्छिन्न-सन्तति वृद्धिस्थिरलक्ष्मी-कीर्ति कायशत्रुपराजयसदभीष्टसिद्धयर्थ गौरीतिलकमण्डलपूजनपूर्वकं श्रीदुर्गापूजनं करिष्ये ।

अङ्गन्यासं करन्यासं च विधाय गौरीतिलकमण्डलस्थितदेवानाम् आवाहनाय हस्ते गन्धाक्षतपुष्पाणि आदाय तत्तद्देवनामानि स्मरन् क्रमशः क्षिपेत् --

## कलशसमीपे पीतकोष्ठेषु चतुरोदेवान् पूजयेत् --

१ ॐ महाविष्णवे नमः, ॐ महाविष्णुमावाहयामि स्थापयामि (ऐशाने)

२ ॐ महालक्ष्म्यै नमः, ॐ महालक्ष्मीमावाहयामि स्थापयामि (आग्नेयाम्)

३ ॐ महेश्वराय नमः, ॐ महेश्वरमावाहयामि स्थापयामि (नैऋत्याम्)

४ ॐ माहामायायै नमः, ॐ महामायामावाहयामि स्थापयामि (वायव्याम्)

## हृदयाङ्गमध्ये चतुर्षु कोष्ठेषु चतुर्वेदान्पूजयेत् --

५ ॐ ऋग्वेदाय नमः, ॐ ऋग्वेदमावाहयामि स्थापयामि (पूर्वे)

६ ॐ यजुर्वेदाय नमः, ॐ यजुर्वेदमावाहयामि स्थापयामि (दक्षिणे)

७ ॐ सामवेदाय नमः, ॐ सामवेदमावाहयामि स्थापयामि (पश्चिमे)

८ ॐ अथर्ववेदाय नमः, ॐ अथर्ववेदमावाहयामि स्थापयामि (उत्तरे)

## पूर्वादीशानपर्यन्तं श्वेतकोष्ठेषु पञ्चदेवान् पूजयेत् --

९ ॐ अद्भ्यो नमः ॐ अपः आवाहयामि स्थापयामि

१० ॐ जलोद्भवाय नमः ॐ जलोद्भव आवाहयामि स्थापयामि

११ ॐ ब्रह्मणे नमः ॐ ब्रह्माणम् आवाहयामि स्थापयामि

१२ ॐ प्रजापतये नमः ॐ प्रजापतिम् आवाहयामि स्थापयामि

१३ ॐ शिवाय नमः ॐ शिवम् आवाहयामि स्थापयामि

**अग्निकोषे श्वेतकोष्ठयो --**

१४ ॐ अनन्ताय नमः ॐ अनन्तम् आवाहयामि स्थापयामि

१५ ॐ परमेष्ठिते नमः ॐ परमेष्ठिनम् आवाहयामि स्थापयामि

**अग्निकोषे चतुष्कोष्ठेषु --**

१६ ॐ धात्रे नमः ॐ धातारम् आवाहयामि स्थापयामि

१७ ॐ विधात्रे नमः ॐ विधातारम आवाहयामि स्थापयामि

१८ ॐ अर्य्यमणे नमः ॐ अर्य्यमणम् आवाहयामि स्थापयामि

१९ ॐ मित्राय नमः ॐ मित्रम् आवाहयामि स्थापयामि

**दक्षिणश्वेतेषु**

२० ॐ वरुणाय नमः ॐ वरुणम् आवाहयामि स्थापयामि

२१ ॐ अंशुमते नमः ॐ अंशुमन्तम् आवाहयामि स्थापयामि

२२ ॐ भगाय नमः ॐ भगम् आवाहयामि स्थापयामि

२३ ॐ इन्द्राय नमः ॐ इन्द्रम् आवाहयामि स्थापयामि

२४ ॐ विवश्वते नमः ॐ विवश्वन्तम आवाहयामि स्थापयामि

**नैऋत्यकोणयोः --**

२५ ॐ पूष्णे नमः ॐ पूणम् आवाहयामि स्थापयामि

२६ ॐ पर्जन्याय नमः ॐ पर्जन्यम् आवाहयामि स्थापयामि

**नैऋत्यकोणे श्वेतेषु --**

२७ ॐ त्वष्ट्रे नमः ॐ त्वष्टारम् आवाहयामि स्थापयामि

२८ ॐ दक्षयज्ञाय नमः ॐ दक्षयज्ञम् आवाहयामि स्थापयामि

२९ ॐ देववसवे नमः ॐ देववसुम् आवाहयामि स्थापयामि

३० ॐ महासुताय नमः ॐ महासुतम् आवाहयामि स्थापयामि

**पश्चिमे श्वेतेषु --**

३१ ॐ सुघर्मणे नमः ॐ सुघर्माणम् आवाहयामि स्थापयामि

३२ ॐ शङ्खपदे नमः ॐ शंखपदम् आवाहयामि स्थापयामि

३३ ॐ महावाहवे नमः ॐ महावाहुम् आवाहयामि स्थापयामि

३४ ॐ वपुष्मते नमः ॐ वपुष्मन्तम् आवाहयामि स्थापयामि

३५ ॐ अनन्ताय नमः ॐ अनन्तम् आवाहयामि स्थापयामि

**वायौ श्वेतषोः--**

३६ ॐ महेरणाय नमः ॐ महेरणम् आवाहयामि स्थापयामि

३७ ॐ विश्वाक्सवे नमः ॐ विश्वावसुम् आवाहयामि स्थापयामि

**वायौ श्वेतेषु --**

३८ ॐ सुपर्वणे नमः ॐ सुपर्वाणम् आवाहयामि स्थापयामि

३९ ॐ विष्टराय नमः ॐ विष्टरम् आवाहयामि स्थापयामि

४० ॐ रुद्रदेवतायै नमः ॐ रुद्रदेवताम् आवाहयामि स्थापयामि

४१ ॐ ध्रुवाय नमः ॐ ध्रुवम् आवाहयामि स्थापयामि

**उत्तरश्वेतेषु --**

४२ ॐ धरायै नमः, ॐ धराम् आवाहयामि स्थापयामि

४३ ॐ सोमाय नमः, ॐ सोमम् आवाहयामि स्थापयामि

४४ ॐ आपवत्साय नमः ॐ आपवत्सम् आवाहयामि स्थापयामि

४५ ॐ नलाय नमः ॐ नलम् आवाहयामि स्थापयामि

४६ ॐ अनिलाय नमः ॐ अनिलम आवाहयामि स्थापयामि

**ईशान्ये श्वेतयोः --**

४७ ॐ प्रत्यूपाय नमः ॐ प्रत्युषम् आवाहयामि स्थापयामि

४८ ॐ प्रभासाय नमः ॐ प्रभासम् आवाहयामि स्थापयामि

**ईशानकोणे श्वेतेषु --**

४९ ॐ आवर्त्ताय नमः, ॐ आवर्तम आवाहयामि स्थापयामि

५० ॐ सावर्त्ताय नमः, ॐ सावर्त्तम् आवाहयामि स्थापयामि

५१ ॐ द्रोणाय नमः, ॐ द्रोणम् आवाहयामि स्थापयामि

५२ ॐ पुष्कराय नमः, ॐ पुष्करम् आवाहयामि स्थापयामि

(इति हृदयाङ्गपूजनम् । अथ शिरोंगशक्तिं पूजयत्)

**ईशान हरित्कोष्ठेषु --**

५३ ॐ ह्री कार्यै नमः ह्रीं कारीम् आवाहयामि स्थापयामि

५४ ॐ ह्रीं यै नम, ॐ ह्रीं आवाहयामि स्थापयामि

५५ ॐ कात्यायन्यं नमः ॐ कात्यायनीम् आवाहयामि स्थापयामि

५६ ॐ चामुण्डायै नमः ॐ चामुण्डाम आवाहयामि स्थापयामि

५७ ॐ महादिव्यायै नमः ॐ महादिव्याम् आवाहयामि स्थापयामि

५८ ॐ महाशब्दायै नमः ॐ महाशव्दाम् आवाहयामि स्थापयामि

५९ ॐ सिद्धिदायै नमः ॐ सिद्धिदाम् आवाहयामि स्थापयामि

६० ॐ ऐं नमः ॐ ऐं आवाहयामि स्थापयामि

६१ ॐ श्री श्रियै नमः ॐ श्री श्रियम् आवाहयामि स्थापयामि

६२ ॐ ह्रीं ह्रियै नमः ॐ ह्रीं ह्रियम् आवाहयामि स्थापयामि

## ईशानकोणे पीतकोष्ठेषु --

६३ ॐ लक्ष्म्यै नमः ॐ लक्ष्मीम् आवाहयामि स्थापयामि

६४ ॐ श्रियै नमः ॐ श्रियम् आवाहयामि स्थापयामि

६५ ॐ सुघनाय नमः ॐ सुघनम् आवाहयामि स्थापयामि

६६ ॐ मेधायै नमः ॐ मेधाम् आवाहयामि स्थापयामि

६७ ॐ प्रज्ञायै नमः ॐ प्रज्ञाम् आवाहयामि स्थापयामि

६८ ॐ मत्यै नमः ॐ मतीम् आवाहयामि स्थापयामि

६९ ॐ स्वाहायै नमः ॐ स्वाहाम् आवाहयामि स्थापयामि

७० ॐ सरस्वत्यै नमः ॐ सरस्वतीम् आवाहयामि स्थापयामि

## अग्निकोणे हरित्कोष्ठेषु --

७१ ॐ गौर्यै नमः, ॐ गौरीम् आवाहयामि स्थापयामि

७२ ॐ पद्मायै नमः, ॐ पद्माम् आवाहयामि स्थापयामि

७३ ॐ शच्यै नमः, ॐ शचीम् आवाहयामि स्थापयामि

७४ ॐ सुमेधायै नमः, ॐ सुमेधाम् आवाहयामि स्थापयामि

७५ ॐ सावित्र्यै नमः, ॐ सावित्रीम् आवाहयामि स्थापयामि

७६ ॐ विजयायै नमः, ॐ विजयाम् आवाहयामि स्थापयामि

७७ ॐ देवसेनायै नमः, ॐ देवसेनाम् आवाहयामि स्थापयामि

७८ ॐ स्वाहायै नमः, ॐ स्वाहाम् आवाहयामि स्थापयामि

७९ ॐ स्वधायै नमः, ॐ स्वधाम् आवाहयामि स्थापयामि
८० ॐ मात्रे नमः, ॐ मातरम् आवाहयामि स्थापयामि
८१ ॐ गायत्र्यै नमः, ॐ गायत्रीम् आवाहयामि स्थापयामि

## अग्निकोणे पीतकोष्ठेषु --

८२ ॐ लोकमात्र्यै नमः, ॐ लोकमातरम् आवाहयामि स्थापयामि
८३ ॐ धृत्यै नमः, ॐ धृतिम् आवाहयामि स्थापयामि
८४ ॐ पुष्ट्यै नमः, ॐ पुष्टिम् आवाहयामि स्थापयामि
८५ ॐ तुष्ट्यै नमः, ॐ तुष्टिम् आवाहयामि स्थापयामि
८६ ॐ आत्मकुलदेवतायै नमः, ॐ आत्मकुलदेवताम् आवाहयामि स्थापयामि
८७ ॐ गणेश्वर्य्यौ नमः, ॐ गणेश्वरीम् आवाहयामि स्थापयामि
८८ ॐ कुलमात्र्ये नमः, ॐ कुलमातरम् आवाहयामि स्थापयामि
८९ ॐ शान्त्ये नमः, ॐ शान्तिम् आवाहयामि स्थापयामि

## ईशानकोणे वाप्यां कृष्णकोष्ठे १ श्वेतेषु ४ --

९० ॐ जयन्त्यै नमः, ॐ जयन्तीम् आवाहयामि स्थापयामि
९१ ॐ मङ्गलायै नमः, ॐ मङ्गलाम् आवाहयामि स्थापयामि
९२ ॐ काल्यै नमः, ॐ कालीम् आवाहयामि स्थापयामि
९३ ॐ भद्रकाल्यै नमः, ॐ भद्रकालीम् आवाहयामि स्थापयामि
९४ ॐ कपालिन्यै नमः, ॐ कपालिनीम् आवाहयामि स्थापयामि

## अग्निकोणे वाप्यां कृष्णकोष्ठे १ श्वेतेषु ४--

९५ ॐ दुर्गायै नमः, ॐ दुर्गाम् आवाहयामि स्थापयामि
९६ ॐ क्षमायै नमः, ॐ क्षमाम् आवाहयामि स्थापयामि
९७ ॐ शिवायै नमः, ॐ शिवा[illegible] आवाहयामि स्थापयामि
९८ ॐ धात्र्यै नमः, ॐ धात्रीम् आवाहयामि स्थापयामि
९९ ॐ स्वाहास्वधाभ्यां नमः, ॐ स्वाहास्वधाम् आवाहयामि स्थापयामि

(इति शिरोंगपूजनम्, अथ शिखांगदेवपूजनम्)

## नैऋत्यकोणे हरित्कोष्ठेषु -- ११ --

१०० ॐ दीप्यमानायै नमः, ॐ दीप्यमानाम् आवाहयामि स्थापयामि
१०१ ॐ दीप्तायै नमः, ॐ दीप्ताम् आवाहयामि स्थापयामि

| | | |
|---|---|---|
| १०२ | ॐ सूक्ष्मायै नमः, | ॐ सूक्ष्माम् आवाहयामि स्थापयामि |
| १०३ | ॐ विभूत्यै नमः, | ॐ विभूतिम् आवाहयामि स्थापयामि |
| १०४ | ॐ विमलायै नमः, | ॐ विमलाम् आवाहयामि स्थापयामि |
| १०५ | ॐ परायै नमः, | ॐ पराम् आवाहयामि स्थापयामि |
| १०६ | ॐ अमोघायै नमः, | ॐ अमोघाम् आवाहयामि स्थापयामि |
| १०७ | ॐ विधूतायै नमः, | ॐ विधूताम् आवाहयामि स्थापयामि |
| १०८ | ॐ सर्वतोमुख्यै नमः, | ॐ सर्वतोमुखीम् आवाहयामि स्थापयामि |
| १०९ | ॐ आनन्दायै नमः, | ॐ आनन्दाम् आवाहयामि स्थापयामि |
| ११० | ॐ नन्दिन्यै नमः,. | ॐ नन्दिनीम् आवाहयामि स्थापयामि |

## नैऋत्यकोणे पीतकोष्ठेषु ८--

| | | |
|---|---|---|
| १११ | ॐ शान्त्यै नमः, | ॐ शान्तिम् आवाहयामि स्थापयामि |
| ११२ | ॐ महासूक्ष्मायै नमः, | ॐ महासूक्ष्माम् आवाहयामि स्थापयामि |
| ११३ | ॐ करालिन्यै नमः, | ॐ करालिनीम् आवाहयामि स्थापयामि |
| ११४ | ॐ भारत्यै नमः, | ॐ भारतीम् आवाहयामि स्थापयामि |
| ११५ | ॐ ज्योतिषे नमः, | ॐ ज्योतिषम् आवाहयामि स्थापयामि |
| ११६ | ॐ ब्राह्म्यै नमः, | ॐ ब्राह्मीम् आवाहयामि स्थापयामि |
| ११७ | ॐ माहेश्वर्यै नमः, | ॐ माहेश्वरीम् आवाहयामि स्थापयामि |
| ११८ | ॐ कौमार्यै नमः, | ॐ कौमारीम् आवाहयामि स्थापयामि |

## वायुकोणे हरित्कोष्ठेषु -- ११ --

| | | |
|---|---|---|
| ११९ | ॐ वैष्णव्यै नमः, | ॐ वैष्णवीम् आवाहयामि स्थापयामि |
| १२० | ॐ वाराह्यै नमः, | ॐ वाराहीम् आवाहयामि स्थापयामि |
| १२१ | ॐ इन्द्राण्यै नमः, | ॐ इन्द्राणीम् आवाहयामि स्थापयामि |
| १२२ | ॐ चण्डिकायै नमः, | ॐ चण्डिकाम् आवाहयामि स्थापयामि |
| १२३ | ॐ बुद्ध्यै नमः, | ॐ बुद्धिम् आवाहयामि स्थापयामि |
| १२४ | ॐ लज्जायै नमः, | ॐ लज्जाम् आवाहयामि स्थापयामि |
| १२५ | ॐ वपुष्मत्यै नमः, | ॐ वपुष्मतीम् आवाहयामि स्थापयामि |
| १२६ | ॐ शान्त्यै नमः, | ॐ शान्तिम् आवाहयामि स्थापयामि |

१२७ ॐ कान्त्यै नमः, ॐ कान्तिम् आवाहयामि स्थापयामि
१२८ ॐ रत्यै नमः, ॐ रतिम् आवाहयामि स्थापयामि
१२९ ॐ प्रीत्यै नमः, ॐ प्रीतिम आवाहयामि स्थापयामि

**वायुकोणे पीतकोष्ठेषु -- ८**

१३० ॐ कीर्त्यै नमः, ॐ कीर्तिम् आवाहयामि स्थापयामि
१३१ ॐ प्रमायै नमः, ॐ प्रमाम् आवाहयानि स्थापयामि
१३२ ॐ कान्यायै नमः, ॐ कान्याम् आवाहयामि स्थापयामि
१३३ ॐ कान्तायै नमः, ॐ कान्ताम् आवाहयामि स्थापयामि
१३४ ॐ ऋद्ध्यै नमः, ॐ ऋद्धिम् आवाहयामि स्थापयामि
१३५ ॐ दयायै नमः, ॐ दयाम् आवाहयामि स्थापयामि
१३६ ॐ शिवदूत्यै नमः, ॐ शिवदूतीम् आवाहयामि स्थापयामि
१३७ ॐ श्रद्धायै नमः, ॐ श्रद्धाम् आवाहयामि स्थापयामि

**वैऋत्यवाप्यां कृष्णकोष्ठे १ श्वेतुषु ४--**

१३८ ॐ क्षमायै नमः, ॐ क्षमाम् आवाहयामि स्थापयामि
१३९ ॐ क्रियायै नमः, ॐ क्रियाम् आवाहयामि स्थापयामि
१४० ॐ विद्यायै नमः, ॐ विद्याम् आवाहयामि स्थापयामि
१४१ ॐ मोहिन्यै नमः, ॐ मोहिनीम् आवाहयामि स्थापयामि
१४२ ॐ यशोवत्यै नमः, ॐ यशोवतीम् आवाहयामि स्थापयामि

**दायोवाप्यां कृष्णकोष्ठेषु १ श्वेतेषु ४--**

१४३ ॐ कृपावत्यै नमः, ॐ कृपावतीम् आवाहयामि स्थापयामि
१४४ ॐ सलिलायै नमः, ॐ सलिलाम् आवाहयामि स्थापयामि
१४५ ॐ सुशीलायै नमः, ॐ सुशीलाम आवाहयामि स्थापयामि
१४६ ॐ ईश्वर्यै नमः, ॐ ईश्वरीम् आवाहयामि स्थापयामि
१४७ ॐ सिद्धेश्वर्यै नमः, ॐ सिद्धेश्वरीम् आवाहयामि स्थापयामि

(कवचाङ्गेषु ऋषीन्पूजयेत् पूर्वेऽरुणपीतकोष्ठेषु -- ४)

१४८ ॐ द्वैपायनाय नमः, ॐ द्वैपायनम् आवाहयामि स्थापयामि
१४९ ॐ भारद्वाजाय नमः, ॐ भारद्वाजम् आवाहयामि स्थापयामि

१५० ॐ मित्राय नमः, ॐ मित्रम् आवाहयामि स्थापयामि
१५१ ॐ सनकाय नमः, ॐ सनकम् आवाहयामि स्थापयामि
१५२ ॐ गौतमाय नमः, ॐ गौतमम् आवाहयामि स्थापयामि
१५३ ॐ सुमन्तव नमः, ॐ सुमन्तवे आवाहयामि स्थापयामि
१५४ ॐ त्वष्ट्रे नमः, ॐ त्वष्टारम् आवाहयामि स्थापयामि
१५५ ॐ सनन्दाय नमः, ॐ सनन्दम् आवाहयामि स्थापयामि

**पश्चिमेऽरुणपीतकोष्ठेषु -- ४**

१५६ ॐ देवलाय नमः, ॐ देवलम् आवाहयामि स्थापयामि
१५७ ॐ व्यासाय नमः, ॐ व्यासम् आवाहयामि स्थापयामि
१५८ ॐ ध्रुवाय नमः, ॐ ध्रुवम् आवाहयामि स्थापयामि
१५९ ॐ सनातनाय नमः, ॐ सनातनम् आवाहयामि स्थापयामि

**उत्तरेऽरुणपीतकोष्ठेषु -- ४**

१६० ॐ वसिष्ठाय नमः, ॐ वसिष्ठम् आवाहयामि स्थापयामि
१६१ ॐ च्यवनाय नमः, ॐ च्यवनम् आवाहयामि स्थापयामि
१६२ ॐ पुष्कराय नमः, ॐ पुष्करम् आवाहयामि स्थापयामि
१६३ ॐ सनत्कुमाराय नमः, ॐ सनत्कुमारम् आवाहयामि स्थापयामि

**ऐशाने, अग्निकोणे, नैऋत्यकोणे, वायुकोणे कृष्णकोष्ठे च एकैकम् --**

१६४ ॐ कण्वाय नमः, ॐ कण्वम् आवाहयामि स्थापयामि
१६५ ॐ मैत्राय नमः, ॐ मैत्रम आवाहयामि स्थापयामि
१६६ ॐ कवये नमः, ॐ कविम् आवाहयामि स्थापयामि
१६७ ॐ विश्वामित्राय नमः ॐ विश्वामित्रम् आवाहयामि स्थापयामि

**मध्येपीतकोष्ठेषु -- ८**

१६८ ॐ वामदेवाय नमः, ॐ वामदेवम् आवाहयामि स्थापयामि
१६९ ॐ सुमन्ताय नमः, ॐ सुमन्तम् आवाहयामि स्थापयामि
१७० ॐ जैमिनये नमः, ॐ जैमिनिम् आवाहयामि स्थापयामि
१७१ ॐ क्रतवे नमः, ॐ क्रतुम् आवाहयामि स्थापयामि

१७२ ॐ पिप्पलादाय नमः, ॐ पिप्पलादम् आवाहयामि स्थापयामि

१७३ ॐ पराशराय नमः, ॐ पराशरम् आवाहयामि स्थापयामि

१७४ ॐ गर्गाय नमः, ॐ गर्गम् आवाहयामि स्थापयामि

१७५ ॐ वैशंपायनाय नमः, ॐ वैशंपायनम् आवाहयामि स्थापयामि

## मध्ये कृष्णकोष्ठेषु ईशानतः -- १०

१७६ ॐ मार्कण्डेयाय नमः ॐ मार्कण्डेय् आवाहयामि स्थापयामि

१७७ ॐ मृकंडाय नमः, ॐ मृकंडम् आवाहयामि स्थापयामि

१७८ ॐ लोमशाय नमः, ॐ लोमशम् आवाहयामि स्थापयामि

१७९ ॐ पुलहाय नमः, ॐ पुलहम् आवाहयामि स्थापयामि

१८० ॐ पुलरत्त्याय नमः, ॐ पुलरत्त्यम् आवाहयामि स्थापयामि

१८१ ॐ वृहस्पतये नमः, ॐ वृहस्पतिम् आवाहयामि स्थापयामि

१८२ ॐ जमदग्नये नमः, ॐ जमदग्निम् आवाहयामि स्थापयामि

१८३ ॐ जामदग्न्याय नमः, ॐ जामदग्न्यम् आवाहयामि स्थापयामि

१८४ ॐ दालभ्याय नमः, ॐ दालभ्यम् आवाहयामि स्थापयामि

१८५ ॐ गालवाय नमः, ॐ गालवम् आवाहयामि स्थापयामि

## मध्ये हरित्कोष्ठेषु ईशानतः -- १६

१८६ ॐ याज्ञवल्काय नमः, ॐ याज्ञवल्कम् आवाहयामि स्थापयामि

१८७ ॐ दुर्वाससे नमः, ॐ दुर्वाससम् आवाहयामि स्थापयामि

१८८ ॐ सौभरये नमः, ॐ सौभरिम् आवाहयामि स्थापयामि

१८९ ॐ जावालये नमः, ॐ जावालिम् आवाहयामि स्थापयामि

१९० ॐ वाल्मीकये नमः, ॐ वाल्मीकिम् आवाहयामि स्थापयामि

१९१ ॐ बह्वृचाय नमः, ॐ वहवृचम् आवाहयामि स्थापयामि

१९२ ॐ इन्द्रप्रमितये नमः, ॐ इन्द्रप्रमितिम् आवाहयामि स्थापयामि

१९३ ॐ देवमित्राय नमः, ॐ देवमित्रम् आवाहयामि स्थापयामि

१९४ ॐ जाजलये नमः, ॐ जाजलिम् आवाहयामि स्थापयामि

१९५ ॐ शाकल्याय नमः, ॐ शाकलम् आवाहयामि स्थापयामि

१९६ ॐ मृद्गलाय नमः, ॐ मुद्गलम् आवाहयामि स्थापयामि

१९७ ॐ जातुकर्ण्याय नमः, ॐ जातुकर्ण्यम् आवाहयामि स्थापयामि

१९८ ॐ बलाकाय नमः, ॐ बलाकम् आवाहयामि स्थापयामि

१९९ ॐ कृपाचार्याय नमः, ॐ कृपाचार्यम् आवाहयामि स्थापयामि

२०० ॐ सुकर्मणे नमः, ॐ सुकर्माणम् आवाहयामि स्थापयामि

२०१ ॐ कौशल्याय नमः, ॐ कौशल्यम् आवाहयामि स्थापयामि

(इति कवचांगपूजनम्)

## नेत्राङ्गपूजनम्, ईशानकोणेऽरुणकोष्ठेषु -- १२

२०२ ॐ ब्रह्माग्नये नमः, ॐ ब्रह्माग्निम् आवाहयामि स्थापयामि

२०३ ॐ गार्हप्पत्याग्नये नमः, ॐ गार्हप्पत्याग्निम् आवाहयामि स्थापयामि

२०४ ॐ ईश्वराग्नये नमः, ॐ ईश्वराग्निम् आवाहयामि स्थापयामि

२०५ ॐ दक्षिणाग्नये नमः, ॐ दक्षिणाग्निम् आवाहयामि स्थापयामि

२०६ ॐ वैष्णवाग्नये नमः, ॐ वैष्णवाग्निम् आवाहयामि स्थापयामि

२०७ ॐ आहवनायाग्नये नमः, ॐ आहवनाग्निम् आवाहयामि स्थापयामि

२०८ ॐ सप्तजिह्वाग्नये नमः, ॐ सप्तजिह्णाग्निम् आवाहयामि स्थापयामि

२०९ ॐ इध्मजिह्वाग्नये नमः, ॐ इहमजिह्वाग्निम् आवाहयामि स्थापयामि

२१० ॐ प्रवर्ग्याग्नये नमः, ॐ प्रवर्ग्याग्निम् आवाहयामि स्थापयामि

२११ ॐ वडवाग्नये नमः, ॐ वडवाग्निम् आवाहयामि स्थापयामि

२१२ ॐ जठराग्नये नमः, ॐ जठराग्निम् आवाहयामि स्थापयामि

२१३ ॐ लोकाग्नये नमः, ॐ लोकाग्निम् आवाहयामि स्थापयामि

## अग्निकोणे वरुणकोष्ठेषु -- १२

२१४ ॐ सूर्याय नमः ॐ सूर्यम् आवाहयामि स्थापयामि

२१५ ॐ वेदाङ्गाय नमः ॐ वेदाङ्गम् आवाहयामि स्थापयामि

२१६ ॐ भानवे नमः ॐ भानुम् आवाहयामि स्थापयामि

२१७ ॐ इन्द्राय नमः ॐ इन्द्रम् आवाहयामि स्थापयामि

२१८ ॐ खगाय नमः ॐ खगम् आवाहयामि स्थापयामि

२१९ ॐ गभस्तिने नमः ॐ गभस्तिनम् आवाहयामि स्थापयामि

२२० ॐ यमाय नमः ॐ यमम् आवाहयामि स्थापयामि

२२१ ॐ अंशुमते नमः ॐ अंशुमन्तम् आवाहयामि स्थापयामि
२२२ ॐ हिरण्यरेतसे नमः ॐ हिरण्यरेतसम् आवाहयामि स्थापयामि
२२३ ॐ दिवाकराय नमः ॐ दिवाकरम् आवाहयामि स्थापयामि
२२४ ॐ मित्राय नमः ॐ मित्रम् आवाहयामि स्थापयामि
२२५ ॐ विष्णवे नमः ॐ विष्णुम् आवाहयामि स्थापयामि

**नैऋत्यकोणेऽरुणकोष्ठेषु -- १२**

२२६ ॐ शम्भवे नमः ॐ शम्भुम् आवाहयामि स्थापयामि
२२७ ॐ गिरिशयाय नमः ॐ गिरिशम् आवाहयामि स्थापयामि
२२८ ॐ अजैकपदे नमः ॐ अजैकपदम् आवाहयामि स्थापयामि
२२९ ॐ अहिर्बुध्न्याय नमः ॐ अहिर्युध्न्याम् आवाहयामि स्थापयामि
२३० ॐ पिनाकपाणये नमः ॐ पिनाकपाणिम् आवाहयामि स्थापयामि
२३१ ॐ अपराजिताय नमः ॐ अपराजितम् आवाहयामि स्थापयामि
२३२ ॐ भुवनाधीश्वराय नमः ॐ भुवनाधीश्वरम आवाहयामि स्थापयामि
२३३ ॐ कपालिने नमः ॐ कपालिनम् आवाहयामि स्थापयामि
२३४ ॐ विशांपतये नमः ॐ विशांपतिम् आवाहयामि स्थापयामि
२३५ ॐ रुद्राय नमः ॐ रुद्रम् आवाहयामि स्थापयामि
२३६ ॐ वीरभद्राय नमः ॐ वीरभद्रम् आवाहयामि स्थापयामि
२३७ ॐ अश्विनीकुमाराभ्यां नमः ॐ अश्विनीकुमारौ आवाहयामि स्थापयामि

**वायुकोणेऽरुणकोष्ठेषु -- ११ --**

२३८ ॐ आवहाय नमः ॐ आवहम् आवाहयामि स्थापयामि
२३९ ॐ प्रवहाय नमः ॐ प्रवहम् आवाहयामि स्थापयामि
२४० ॐ उद्वहाय नमः ॐ उद्वहम् आवाहयामि स्थापयामि
२४१ ॐ संवहाय नमः ॐ संवहम् आवाहयामि स्थापयामि
२४२ ॐ विवहाय नमः ॐ विवहम् आवाहयामि स्थापयामि
२४३ ॐ परिवहाय नमः ॐ परिवहम् आवाहयामि स्थापयामि
२४४ ॐ धरायै नमः ॐ धराम् आवाहयामि स्थापयामि
२४५ ॐ अद्भ्यो नमः ॐ अपः आवाहयामि स्थापयामि

२४६ ॐ अग्नये नमः ॐ अग्निम् आवाहयामि स्थापयामि
२४७ ॐ वायवे नमः ॐ वायुम् आवाहयामि स्थापयामि
२४८ ॐ आकाशाय नमः ॐ आकाशम् आवाहयामि स्थापयामि

(ऋषीन् पूजयेत्) ईशानादीशपर्यन्तं वाह्यपक्तौ कृष्णकोष्ठेषु --

२४९ ॐ हिरण्यनाभाय नमः ॐ हिरण्यनाभम् आवाहयामि स्थापयामि
२५० ॐ पुष्पजयाय नमः ॐ पुष्पञ्जयम् आवाहयामि स्थापयामि
२५१ ॐ द्रोणाय नमः ॐ द्रोणम् आवाहयामि स्थापयामि
२५२ ॐ श्रृंगिणे नमः ॐ श्रृंगिणम् आवाहयामि स्थापयामि
२५३ ॐ वादरायणाय नमः ॐ वादरायणम् आवाहयामि स्थापयामि
२५४ ॐ अगस्त्याय नमः ॐ अगस्त्यम् आवाहयामि स्थापयामि
२५५ ॐ मनवे नमः ॐ मनुम् आवाहयामि स्थापयामि
२५६ ॐ कश्यपाय नमः ॐ कश्यपम् आवाहयामि स्थापयामि
२५७ ॐ धौम्यायम् नमः ॐ धौम्यम् आवाहयामि स्थापयामि
२५८ ॐ भृमवे नमः ॐ भृगुम् आवाहयामि स्थापयामि
२५९ ॐ वीतिहोत्राय नमः ॐ वीतिहोत्रम् आवाहयामि स्थापयामि
२६० ॐ मधुच्छंदसे नमः ॐ मधुच्छदसम् आवाहयामि स्थापयामि
२६१ ॐ वीरसेनाय नमः ॐ वीरसेनम् आवाहयामि स्थापयामि
२६२ ॐ कृतवृष्णवे नमः ॐ कृतविष्णिम् आवाहयामि स्थापयामि
२६३ ॐ अत्रये नमः ॐ अत्रिम् आवाहयामि स्थापयामि
२६४ ॐ मेधातिथियें नमः ॐ मेधातिथिम् आवाहयामि स्थापयामि
२६५ ॐ अरिष्टनेमये नमः ॐ अरिष्टनेमिम् आवाहयामि स्थापयामि
२६६ ॐ अङ्गिरसाय नमः ॐ अङ्गिरसम् आवाहयामि स्थापयामि
२६७ ॐ इन्द्रप्रमदाय नमः ॐ इन्द्रप्रमदम् आवाहयामि स्थापयामि
२६८ ॐ इध्मबाहवे नमः ॐ इध्मवाहुम् आवाहयामि स्उथापयामि
२६९ ॐ पिप्लादाय नमः ॐ पिप्पलादम् आवाहयामि स्थापयामि
२७० ॐ नारदाय नमः ॐ नारदम् आवाहयामि स्थापयामि

| | | |
|---|---|---|
| २७१ | ॐ अरिष्टसेनाय नमः | ॐ अरिष्टसेनम् आवाहयामि स्थापयामि |
| २७२ | ॐ वरुणाय नमः | ॐ वरुणम् आवाहयामि स्थापयामि |
| २७३ | ॐ कपिलाय नमः | ॐ कपिलम् आवाहयामि स्थापयामि |
| २७४ | ॐ कर्दमाय नमः | ॐ कर्दमम् आवाहयामि स्थापयामि |
| २७५ | ॐ मरीचये नमः | ॐ मरीचिम् आवाहयामि स्थापयामि |
| २७६ | ॐ क्रतवे नमः | ॐ क्रतुम् आवाहयामि स्थापयामि |
| २७७ | ॐ प्रचेतसे नमः | ॐ प्रचेतसम् आवाहयामि स्थापयामि |
| २७८ | ॐ उत्तमाय नमः | ॐ उत्तमम् आवाहयामि स्थापयामि |
| २७९ | ॐ दधीचये नमः | ॐ दधीचिम् आवाहयामि स्थापयामि |
| २८० | ॐ श्राद्धदेवेभ्यो नमः | ॐ श्राद्धदेवान् आवाहयामि स्थापयामि |
| २८१ | ॐ गणदेवेभ्यो नमः | ॐ गणदेवान् आवाहयामि स्थापयामि |
| २८२ | ॐ विद्याधरेभ्यो नमः | ॐ विद्याधरान् आवाहयामि स्थापयामि |
| २८३ | ॐ अप्सरेभ्यो नमः | ॐ अप्सरान् आवाहयामि स्थापयामि |
| २८४ | ॐ यक्षेभ्यो नमः | ॐ यक्षान् आवाहयामि स्थापयामि |
| २८५ | ॐ रक्षेभ्यो नमः | ॐ रक्षान् आवाहयामि स्थापयामि |
| २८६ | ॐ गन्धर्वेभ्यो नमः | ॐ गन्धर्वान् आवाहयामि स्थापयामि |
| २८७ | ॐ पिशाचेभ्यो नमः | ॐ पिशाचान् आवाहयामि स्थापयामि |
| २८८ | ॐ गुह्यकेभ्यो नमः | ॐ गुह्यकान् आवाहयामि स्थापयामि |
| २८९ | ॐ सिद्धदेवेभ्यो नमः | ॐ सिद्धदेवान् आवाहयामि स्थापयामि |
| २९० | ॐ ओषधीभ्यो नमः | ॐ ओषधी आवाहयामि स्थापयामि |
| २९१ | ॐ भूतग्रामाय नमः | ॐ भूतग्रामम् आवाहयामि स्थापयामि |
| २९२ | ॐ चतुर्विधभूतग्रामाय नमः | ॐ चतुर्विधभूतग्रामम् आवाहयामि स्थापयामि |

(इत्यसाङ्गपूजनम्)

गौरीतिलकमण्डले ये देवास्तान् सर्वानावाहयामि स्थापयामि । आवाहनासनपाद्यार्घ्यस्नानाचमनवस्त्रयज्ञोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यफलताम्बूलधूपनिराजनान्तोपचारैर्यथासम्भवं श्रीसूक्तेन वैदिकमन्त्रेण वा संपूजयेत् ।

# पीठ पूजा

हस्तेक्षतान् गृहीत्वा -- ॐ पूर्व पीठाय नमः ॐ पं पूर्णपीठाम नमः । कं गाद्यपीठाय नमः । प्राच्यां दिशि -- ॐ उं उड्यानपीठाय नमः । आग्नेय्याम् -- मां मातृपीठाय नमः । दक्षिणे -- जं जालन्धरपीठाय नमः । नैर्ऋत्ये -- कं कोल्हापुरोचपीठाय नमः । पश्चिमे -- पूं पूर्णगिरिपीठाय नमः । वायव्याम -- सौं सौहारोपपीठाय नमः । उत्तरं -- कं कोल्हागिरिपीठाय नमः । ऐशान्याम् -- कं कामरूपीठाय नमः । इति पीठं सम्पूजयेत् । नमस्कारः -- दक्षिणे-गुरवे नमः । परम गुरवे नमः । परमेष्ठिगुरवे नमः । गुरुपंक्तये नमः । मातापितृभ्यां नमः । उपममुनारदसनकव्यासादिभ्यो नमः ।

वामे -- गं गणपतये नमः । दुं दुर्गायै नमः । सं सरस्वत्यै नमः । क्षं क्षेत्रपालाय नमः । इति मत्वा, पीठदेवताः स्थापयेत् ।

पीठमध्ये मं मण्डूकाय नमः । आं आधारशक्त्यै नमः । मूं मूलप्रकृत्यै नमः । कां कालाग्निरुद्राय नमः । आं आदिकूर्माय नमः । अं अनन्ताय नमः । आं आदिवराहाय नमः । पं पृथिव्यै नमः। अं अमृतार्णवाय नमः । रं रत्नद्वीपाय नमः । हं हेमगिरये नमः । नं नन्दनोद्यानाय नमः । कं कल्पवृक्षाय नम । मं मणिमृतलाय नमः । दं दिव्यमण्डपाय नमः । सं स्वर्णवेदिकायै नमः । रं रत्नसिंहासनाय नमः । धं धर्माय नमः । ज्ञां ज्ञानाय नमः । वैं वैराग्याय नमः । ऐं ऐश्वर्याय नमः । इति सम्पूज्य ।

पूर्वे -- अं अनैश्वर्याय नमः । पुनर्मध्ये -- सं सत्वाय नमः । प्रं प्रबोधात्मने नमः । रं रजसे नमः । प्रं प्रकृत्यात्मने नमः । तं तमसे नमः । मं मोहात्मने नमः । सों सोममण्डलाय नमः । सूं सूर्यमण्डलाय नमः । वं वह्निमडलाय नमः । मं मायातत्त्वाय नमः । विं विद्यातत्वाय नमः । शिं शिवतत्वाय नमः । ब्रं ब्रह्मणे नमः । मं महेश्वराय नमः । आं आत्मने नमः । अं अन्तरात्मने नमः । पं परमात्मने नमः । जीं जीवात्मने नमः । ज्ञं ज्ञानात्मने नमः । कं कन्दाय नमः । नो नीलाय नमः । पं पद्माय नमः ।

मं महापद्माय नमः । रं रत्नेभ्यो नमः ।

कें केसरैभ्यो नमः । कं कर्णिकायै नमः ।

ततो नवशक्तीः स्थापयेत् । तद्यथा पूर्वाद्यष्टसु दिक्षु -- नन्दायै नमः । स्कंदायै नमः । रक्तदन्तिकायै नमः । शाकम्भर्यै नमः । दुर्गायै नमः । भीमायै नमः । कालिकायै नमः । भ्रामर्यै नमः । मध्ये -- शिवदूत्यै नमः । इति संस्थाप्य यथा लभ्योपचारैः शक्तिसहितपीठदेवताभ्यां नमः इति पूजयेत् ।

## यन्त्रस्थदेवतास्थापनं पूजनं च

हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा -- बिन्दुमध्ये "ऐं ह्रीं क्लीं चामुण्डायै विच्चे" श्रीमहाकाली -- महालक्ष्मी -- महासरस्वतीस्वरूपिणी -- श्रीत्रिगुणात्मिकादुर्गा देवतायै नमः, श्रीमहाकाली महालक्ष्मी-महासरस्वती स्वरूपिणी श्रीत्रिगुणात्मिकादुर्गा देवतामावाहयामि स्थापयामि ।

बिन्दोः परितोः गुरुचतुष्टयमावाहयेत् -- गुरवे नमः । परात्परगुरवे नमः । परमेष्ठिगुरवे नमः गुरुपत्न्यै नमः (षडङ्गम्) ऐं हृदयाय नमः । ह्रीं शिरसे नमः । क्लीं शिखायै नमः । चामुण्डायै कवचाय नमः । विच्चे नेत्रत्रयाय नमः । ॐ ऐं ह्रीं क्लीं चामुण्डायै अस्त्राय नमः ।

ततस्त्रिकोणे स्वाग्रादि-प्रादक्षिण्येन क्रमेण -- स्वरया सह विधात्रे नमः । श्रिया सह विष्णवे नमः । उमया सह शिवाय नमः । दक्षिणे -- हुं सिंहाय नमः । वामे हुं महिषाय नमः ।

षट्कोणे -- अग्नीशासुरवायव्ये मध्ये दिक्षु च -- ऐं नन्दजाय नमः । ह्रीं रक्त दन्तिकायै नमः । क्लीं शाकम्भर्यै नमः । दुं दुर्गायै नमः । हुं भीमायै नमः । ह्रीं भ्रामर्यै नमः ।

ततोऽष्टपत्रे स्वाग्रादि प्रादक्षिण्यक्रमेण -- ऐं ब्राह्म्यै नमः । ह्रीं माहेश्वर्यै नमः । क्लीं कौमार्यै नमः । ह्रीं वैष्णव्यै नमः । हुं वाराह्यै नमः । क्ष्यौं नारसिंह्यै नमः । लं ऐन्द्र्यै नमः । खें चामुण्डायै नमः ।

ततश्चतुर्विंशतिदले -- विं विष्णुमायायै नमः । चं चेतनायै नमः। बुं बुद्ध्यै नमः । निं निन्द्रायै नमः । क्षुं क्षुधायै नमः । छां छायायै नमः । शं शक्त्यै नमः । तृं तृष्णायै नमः । क्षां क्षान्त्यै नमः । जां जात्यै नमः । लं लज्जायै नमः । शां शान्त्यै नमः । श्रं श्रद्धायै नमः । कां कान्त्यै नमः । ल लक्ष्म्यै नमः । धृं धृत्यै नमः । वृं वृत्यै नमः । पुं श्रुत्यै नमः । स्मृं स्मृत्यै

नमः । दं दयायै नमः । तुं तुष्ट्यै नमः । पुं पुष्ट्यं नमः ।(मां मातृभ्या नमः । भ्रा भ्रान्त्यै नमः । भुपुरे कोणचतुष्टये आग्नेयादिकोणे -- गं गणपतये नमः । क्षं क्षत्रपालाय नम । वं वटुकाय नमः । यौं योगिन्यै नमः ।

**पूर्वादिदिक्षु** -- इन्द्राय नमः । अग्नये नमः । यमाय नमः । निर्ऋतये नमः । वरुणाय नमः । वायवे नमः । सोमाय नमः । ईशानाय नमः । व्रह्मणे नमः । अनन्ताय नमः ।

**तद्वहिः** -- वज्राय नमः । शक्तये नमः । दण्डाय नमः । खड्गाय नमः । पाशाय नमः । अङ्कुशाय नमः । गदायै नमः । त्रिशूलाय नमः । पद्माय नमः । चक्राय नमः ।

**तद्बहिः** -- वज्रहस्तायै गजारूढायै कादम्बरीदेव्यै नमः । शक्तिहस्तायै अजवाहनायै उल्कादेव्यै नमः । दण्डहस्तायै महिपारूढाये करालीदेव्यै नमः । खड्गहस्तायै शववाहनायै रक्ताक्षीदेव्यै नमः । पाशहस्तायै मकरवाहनायै श्वेताक्षी देव्यै नमः । अङ्कुशहस्तायै मृगवाहनायै हरिताक्षीदेव्यै नमः । गदास्तायै सिंहारूढायै यक्षिणींदेव्यै नमः । शूलहस्तायै वृषभवाहनायै कालीदेव्यै नमः । पद्महस्तायै हंसवाहनायै सुरज्येष्ठादेव्यै नमः । चक्रहस्तायै सर्पवाहनायै सर्पराज्ञीदेव्यै नमः ।

इत्यावाह्य ''यन्त्रस्थदेवताभ्यो नमः । इति मूलमन्त्रेण श्रीसूक्तेन वा यथा लब्धोपचारैः पूजनं कुर्यात् ।

## प्रधानकलशस्थापनम् --

तत्र (गौरीतिलकमण्डले) मध्ये

ॐ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीममिः । -- इत्यादि पूर्वोक्त कलशस्थापनविधिना ताम्रकलशं प्रतिष्ठाप्य वरुणं सम्पूजयेत् । तते यन्त्रोपरि स्वर्णमयी दुर्गादेवीप्रतिमामग्न्युत्तारणपूर्वकं स्थापर्येत् ।

## अथाग्न्युत्तारण -- विधिः --

तत्र तावत्साचार्यो यजमानः ।। देशकालौ संकीर्त्य अस्या-स्वर्णमयी-श्रीदुर्गाप्रतिमायाः घटनादिदोषपरिहारार्थ अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये । मूर्ति घृतेनाभ्यज्य । तदुपरि दुग्धमिश्रितजलधारां कुर्यात् पातयेद्वा ।।

## अग्न्युत्तारण मन्त्राः --

ॐ समुद्रस्यत्त्वावकयाग्ने परिव्ययामसि ।। पावकोऽअस्मभ्य ७ शिवोभव ।।१।। ॐ हिमस्य त्वा जरागुणाग्ने परिव्ययामसि ।। पावकोऽअस्मभ्य ७ शिवोभव ।।२।। ॐ उपज्मन्नुप वेतसेऽवतर नदीष्वा ।। अग्ने पित्तमवामसि मण्डूकिताभिरावहि सेमन्नो यज्ञं पावकवर्ण ७ शिवंकृधि ।।३।। ॐ अपामिदं न्ययन ७ समुद्रस्य निवेशनम् ।। अन्यांस्तेऽअस्मत्तपन्तु हेतयः पावको अस्मभ्य ७ शिवो मम ।।४।। ॐ अग्नेपावकरोचिवामन्द्रयादेव जिह्वया ।। आदेवान्नर्वाक्षियक्षि च ।।५।। ॐ य नः पादकदीदिवोग्नेदेवां २ ऽइहावह ।। उपयज्ञ ७ हविश्चनः ।।६।। ॐ पावशकावश्चितयन्त्या कृपाक्षामन्नुरुचऽउषसौ न भानुना ।। तूर्वन्मामन्नेतशस्वन्दूरपऽआयोघृणेनततृषाणोऽअजरः ।।७।। ॐ नमस्ते हरसेशोचिणे नमस्तेऽअस्त्वर्चिचे अन्यांस्ते अस्मत्तपन्तुहेतयः पावकोअस्मभ्य७ शिवोभव ।।८।। ॐ नृपदेव्वेउद्रचदेव्येड्वहिपदेव्वेडघनसदेव्वेड स्वर्विदेवेटः ।।९।। ॐ वेदेशदेवानां यज्ञिया यज्ञियाना ७ संवत्सरीणमुपभागमासते ।। अहुतादोहविषांयज्ञे ऽअरिमिन्त्स्वयं पिवन्तु मधनोधृतस्य ।।१०।। ॐ ये देवादेवेष्णधि देवत्वमायन्वे व्रह्मणः पुरऽएतारोऽअस्य ।। येभ्योपऽऋते पवतेधाम किञ्चन नतेदिवोन पृथिव्याऽअधिस्नुपु ।।११।। ॐ प्राणदाऽ अपानदा व्यानदा व्वर्चोदा वरिवोदाः ।। अन्यांस्तेऽअस्मतचन्तुहेतजः । पावको अस्मभ्य ७ शिवोभव ।।१२।।

## ततः प्राणप्रतिष्ठां कुर्यात् --

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहम् अस्याः श्रीदुर्गा प्रतिमायाः प्राणा इह प्राणाः ।। ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहं अस्याः श्रीदुर्गाप्रतिमाया जीव इहस्थितः ।। ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहम् अस्याः श्रीदुर्गाप्रतिमाया सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखंचिरन्तिष्ठन्तु स्वाहा ।।

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
अस्य देवत्वमर्चायै मामहेति च कश्चन ।।

आगच्छ वरदे देवि । दैत्यदर्प निपूदिनि ।

पूजां गृहाण सुमुखि । ममस्ते शंकरप्रिये ॥

दुर्गे देवि ! रुद्रकच्छ सान्निव्वमिह कल्पय ।

वलिपूजां गृहश्च इहप्राणप्रमिः शक्तिमिः सह ॥

कल्याणजननी कल्पं कामदां करुणाकराम् ।

अनन्तशक्तिसम्पन्नां दुर्गामावाहयाम्यहम् ॥

एह्येहि दुर्गे दुरितौधनाशिनि । प्रचण्डदैत्यौध-विनाशकारिणि ।

उमे महेशार्द्ध-शरीरधारिणि ! स्थिरा भव त्वं मम वृह्मकर्मणि ॥

ॐ मनोजूतिर्व्जुपतामाज्वस्य बृहस्पतिर्यज्ञ मिमन्तनो त्वरिष्टं यज्ञ ७ समिम दधातु ॥ विश्वे देवासऽइहमादयन्तामो ३ प्रतिष्ठ्ठ । एषवै प्रतिष्ठानामयज्ञो यजतेन यज्ञेन वजन्ते सर्वमेव प्रतिष्ठितम्भवसि । इति

## अङ्गन्यासः --

ॐ हिरण्यवर्णा हरिणी सुवर्णरजतस्त्रजाम् ॥ चन्द्रां हिरण्यमयीं लक्ष्मी जातवेदो म आवह ॥१॥ शिरसि ॥ ॐ ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं विन्देयं गामश्चं पुरुपानहम् ॥२॥ नेत्र्योः ॥ ॐ अश्वपूर्णां (वां) रधमध्यां हस्तिनादप्रबोधिनीम् ॥ श्रियं देवी मुण्हवये श्रीर्मादेवीजुपताम् ॥३॥ कर्णयोः ॥ ॐ कांसोस्मितां हिरण्यप्रकारामार्दां ज्वलन्तीं तृप्ता तर्पयतीं । पद्मेस्थितां पद्मवर्णां तामिहोपहवये श्रियम् ॥४॥ घ्राणयोः ॥ ॐ चन्द्रां प्रभासां यशसा ज्वलन्तीम् श्रियं लोके देवजुष्टामुदाराम् ॥ तां पद्मनेमिं शरणामहं प्रपद्ये ऽलक्ष्मीर्मेनश्यतां त्वां वृणोमि ॥५॥ मुखे ॥ ॐ आदित्यवर्णे तपसोऽ धिजातो वनस्पतिस्तव वृक्षोथ बिल्व ॥ तस्यफलानि तपसानुदन्तु मावान्तरावाश्चवाह्या अलक्ष्मीः ॥६॥ ग्रीवायां ॥ ॐ उपैतु मां देवसखः कीर्तिश्चमणिना सह ॥ प्रादुर्भूतोस्मि राष्ट्रेस्मिन कीर्तिमृद्धि ददातु मे ॥७॥ करयोः ॥ ॐ क्षुत्पिपासामलांज्येष्ठामलक्ष्मी नाशयाम्यहम ॥ मभूतिमसमृद्धिं च सर्वां निर्णुदमे गृहात् ॥८॥ हृदि ॥ ॐ गन्धद्वारांदुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरी सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥ नाभौ ॥ ॐ मनसः काममाकूर्तिंवाचः सत्यमशीमहि ॥ पशूनां रूपमन्नस्यं मयि श्रीः श्रयतांयशः शिखे ॥ ॐ कर्दमेन प्रजाभूता मयि संभव कर्दम ॥ श्रियंवासय

मं कुलंमातरं पद्‌चमालिनीम् ।।११।। गुदे ।। ॐ आपः स्रजन्तुस्निग्धानि चिक्लीतवश मं गृहं ।। नि च देवी मातरं श्रियंवासय मे कुले ।।१२।। ऊर्वोः ।। ॐ आर्द्रां पुष्करिणीं पुष्टिं पिंगलापद्ममालिनीम् ।। चन्द्रां हिरण्यमयीं लक्ष्मी जातवेदो म आवह ।।१३।। जानुनोः ।। ॐ आर्द्रांयप्करिणी यष्टिं सुवर्णां हेममालिनीम् ।। सूर्यांहिरण्यमयीं लक्ष्मी जातवेदो म आवह ।।१४।। जंघयोः ।। ॐ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।। यस्यां हिरण्यं प्रभूतिं गावो दास्योंश्वान् विंदेय पुरुपानहम् ।।१५।। चरणयोः ।। ॐ यः शुचिः प्रयतांभूत्वा जुहुयादाज्यमन्वहम् ।। सूक्तं पंचदशर्च च श्रीकामः सततंजपेत् ।।१६।। सर्वाङ्गे ।।

## सविशेष दुर्गाचर्नविधिः

रक्तपुष्पं गृहीत्वा दुर्गादेव्या ध्यानं कुर्यात् --

**ध्यानम् :--**

विद्युद्दाम -- समप्रभां मृगपति -- स्कन्धस्थितां भीपणां
कन्याभिः करवालखेट -- विलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्रगदाऽसिखेटविशिखाँश्चापं गुणं तर्जनीं
विभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ।।
कालाभ्रामां कटाक्षैररैकुलभयदां मौलि-बद्धेन्दुरेखां
शङ्खं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम् ।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद् दुर्गां जयाख्यां त्रिदश-परिवृतां सेवितां सिद्धकामैः ।।
घण्टाशूलहलानि शङ्खमुसले पद्‌मं धनुः सायकं
हस्ताऽब्जैर्दधती घनान्त-विलसच्छीतांशु-तुल्यप्रभाम् ।
गौरीदेहसमुद्‌भवां त्रिजगतामाधारभूतां महा
पूर्वामत्र सरस्वतीमनु भजे शुम्भादि दैत्यार्दिनीम ।।

श्रीदुर्गादेव्यै नमः, ध्यानं समर्पयामि

**हस्ते पुष्पाणि गृहीत्वा आवाहनम् कुर्यात् --**

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्यमयीं लक्ष्मीं मातवेदोममावह ।। आगच्छेह महादेवि सर्वसम्पत्प्रदायिनि । यावद्व्रतं समाप्येश तावत्वं सन्निधौ भव ।। श्रीदुर्गादेव्यै नमः, आवाहनं समर्पयामि ।

**पुनः आसनार्थे पुष्पाणि गृहीत्वा --**

ॐ तां म आवाह आतवेदो लक्ष्मीमनपगामिनीम् । यस्यांहिरण्यं विन्देयं गामस्वं पुरुषानहम् । दुर्गेदेवि सुरेशानि ज्ञानमार्गप्रदे शिवे । आसनं मणिमूणज्यं गृहाण त्वं सुरेश्वरि ।। श्रीदुर्गादेव्यै नमः आसनं समर्पयामि ।

**भगवत्याः पादप्रक्षालनार्थ दुर्वापुष्पसहितं जलमादाय --**

ॐ अश्वपूर्णां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवीमुहवये श्रीर्मा देवी जुषताम् ।। कात्यायनि महादुर्गे चामुण्डे शंकरप्रिये । पाद्यं गृहाण देवेसि भद्रकालि नमोऽस्तुते । भगवत्यै श्रीदुर्गादेव्यै नमः पादयोः पाद्यं समर्पयामि ।

**गन्दाक्षतपुष्पदुर्वादर्भसहितं अर्घ्यार्थ जलमादाय --**

ॐ कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्ती तृप्तां तर्पयन्तीम् । पद्मेस्थितां पद्मवर्णां तामिहोपह्वयेश्रियम् ।। जगत्पूज्ये त्रिलोकेशि सर्वदाजनमंत्रिणि । चण्डीमार्ध गृहाण त्वं देवि विश्वार्तिहारिणि ।। भगवत्यै श्रीदुर्गादेव्यै नमः, हस्तवोः अर्घ्य समर्पयामि ।

**दधिमधुधृतं असमभागं सम्मेल्य --**

ॐ मधुव्याता ऋतायते मधुक्षरन्ति सिन्धवः । माव्वीर्नः सन्त्वोवधीः ।। दधिमधुघृत समायुक्तं पात्र युग्मंसमन्त्रितम् । मधुपर्क गृहाणस्वं शुभदा अवशोमने ।। भगवत्यै श्रीदुर्गादेव्यै नमः मधुपर्क समर्पयामि । मधुपर्कं समर्पयामि । मधुपर्कान्ते आचयनीचं समर्पयामि ।

**आचमनं --**

ॐ चन्द्रां प्रमासां यशसाज्वलन्तीम् श्रियं लोकदेवि जुष्टामुदाराम तां पदम नीमिं शरण महं प्रवद्ये-अलक्ष्मीर्मे नश्यता त्वां वृणोमि ।। पूरितं स्वर्णपात्रे च कंकोलनिर्मल जलम् । ददाम्या चमनं तुभ्यं स्वस्ति कुरु महेश्वरि भागवत्यै श्री दुर्गा दैव्ये नमः आचमनीयं समर्पयामि ।।

**स्नानम् --**

ॐ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽव विल्वः । तस्य फलानि तपसानुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः । ज्ञानमूर्त भद्रकालि

विष्णपूर्व सुरेस्वरि । स्नानं गृहाणदेवेशि तीर्थोदकयिभषितम् ।। श्रीदुर्गादेव्यै नमः, शुद्धोदक स्नानं समर्पयामि ।

## पुनराचमनीयम् --

ॐ उच्छिष्टोऽव्यशुचिर्वापि यस्य स्मरणमात्रतः । शुद्धिमाप्नोति तस्मै से पुनराचंमनीयक्रम । स्नानपत्रोपवीतत्ररोऽपिडकमृतम् ।।

## सुगन्धिततैल्येन स्नानम् --

ॐ अ७ शुनातेऽअ ७ शुः पृण्णतां परुपापरुः ।। गन्धातेसोमवतु मदावरणेश अच्युतः । स्नेहं गृहाण स्नेहेन लोकेश्वरि महानधे । सर्वलोकेषु शुद्धात्मन् दधामि श्वेस्मुत्तमम् ।। श्रीदुर्गादेव्यै नमः, सुगन्विततैल्यस्नानं समर्पयामि ।

## दुग्धस्नानम् --

ॐ पयः पृथिव्यां पयऽओपधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयश्वतीः प्रदिशः सन्तुमह्यम् ।। कामधेनुसमुद्भूं सर्वेषां जीवनं परम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ।। भगवत्यै श्रीदुर्गादेव्यै नमः, पयः स्नानं समर्पयामि । पुनः शुद्धोदकस्नानम् ।

## दधिस्नानम् --

ॐ दधिक्राव्णोऽ अकारिपं जिष्णोरश्वस्य व्याविनः । सुरभिनो मुखा करत्प्रथ आयु ७ पितारिषत् । पयस्वस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।। दध्यानीतं मयादेपि स्नानार्थ प्रतिगृह्यताम् ।। भगवत्यै श्रीदुर्गादेव्ये नमः । दधिस्नानं समर्पयामि पुनः शुद्धोदकस्नानम् ।

## घृतस्नानम् --

ॐ घृतं घृतपाशंनः पिवस व्वसांमसा पावानः पिश्तान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदितऽआदिशो व्विशिश डहिशोशिभ्यः स्वाहा ।। नवनीतसमुद्रत्पन्नं सर्वसन्तोपकारणम् । धृतं तुभ्यं प्रदास्यामि स्नानार्थ प्रतिगृह्यताम् ।। भगवत्यै श्रीदुर्गादेव्यै नमः, धृतस्नानं समर्पयामि । पुनः शुद्धोएकस्नानम् ।

## मधुस्नानम् --

ॐ मधुपच्मुतोपसो मधुमत्पार्धिवंच ७ रजः मधुद्यौरस्तुनः पिता ।

ततपुष्पसमकद्भुतं सुस्वादुमधुरं मधु ।। तेजः पुष्टिकरं दिव्यं स्नानार्थ प्रतिगृह्यताम् ।। भगवत्यै श्रीदुर्गादिव्यै नमः, मधुस्नानं समर्पयामि । पुनः शुद्धोदक-स्नानम् ।

**शर्करास्नानम् --**

ॐ अपा ᳪ रसमुद्वयस ᳪ सुर्वेसन्स ᳪ समाहितम् । अपा ᳪ रसस्ययो रसस्तंवो गृहाम्युत्तङ्कमवामगृहीतो ऽसीन्द्रायत्वा सुष्टं गृहाम्येषतेयोमिरिन्द्रायत्वा नुष्टतमम् ।। इक्षुसारध्सद्भूता शर्करा पुष्टिकारिका । मलापहारिकादिव्या स्नानार्थ प्रतिगृह्यताम् ।। भगवत्यै श्रीदुर्गादेव्यै नमः शर्करास्नानं समर्पयामि । पुनः शुद्धोदकस्नानम् ।

**पञ्चामृतस्नानम् --**

ॐ पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः ।। सरस्वती तु पञ्चधा सोदेके भवत्सरित् ।। पयोदधि घृतं चैव मधुचशर्करान्वितम् । पञ्चामृतंमयानीतं स्नानार्थंप्रतिगृह्यताम् । श्रीदुर्गादिव्यै नमः, पञ्चामृतस्नानं समर्पयामि । पुनः शुद्धोदकस्नानम् ।

**गन्धस्नानम् --**

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरी सर्वभूतानां तामिहोपह्वयेश्रियम् ।। मलयाचलसम्भूतं चन्दनागरुप्सम्भवम् । चन्दनं देवि देवेशि स्नानार्थं प्रतिगृह्यताम् । पुनः शुद्धोदकस्नानम् ।

**सुगन्धितोद्वर्तनस्नानम् --**

ॐ अ ᳪ शुनातेऽअ ᳪ पृच्चतान्परुषापरुः । गन्धस्ते सोममवतु मदायरसोऽअच्युतः ।। नानासुगन्धि द्रव्यं च चन्दनं रजनीयुतम् ।। अर्शन ममा दृशं स्नानार्थं प्रतिगृह्यताम् । रुद्धर्तनस्नानम् समर्पयामि ।

**शुद्धोदकस्नानम् --**

ॐ शुद्धवालः सर्व्वशुद्धवालो सविवालस्त ऽआश्विनाः श्वेतः श्वेताम्वगेशणाते रुद्राय पशुपतये कर्णायामाऽअवहिप्ता रौद्रा नमोकृपाः पार्थन्याः ।। श्रीदुर्गादिव्यै नमः, शुद्धोदकस्नानम् समर्पयामि ।

**युग्मवस्त्रम् --**

ॐ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतः सुराष्ट्रेऽस्मिन्

कीर्तिवृद्धिं ददम्तु मे ।। पटु युग्मकं देवि कञ्चुकेन समन्वितं । परिधेहि कृपां कृत्वा दुर्गेदुर्गतिनाशिनि ।। भगवत्यैः श्रीदुर्गादेव्यै नमः, उपवस्त्रसहितं वस्त्रं समर्पयामि । वस्त्रान्ते आचमनं समर्पयामि ।

## देव्युपवीतार्पणम्

ॐ क्षुत्पिपासामलां जेष्ठामलक्ष्मीं नाशम्याम्यहम् । अभूतिमसमृद्धि च सर्वान्निर्णुदमेगृहात् ।। स्वर्णसूत्रमयं क्रमणं क्रमान्त कीर्तितांपुरा । उपवीतं मयादत्तं गृहाण परमेश्वरि ।। स्वर्णोपवीतं समर्पयामि ।।

## चन्दनम् --

ॐ गन्धद्वारां दुराधर्पां नित्यपुष्टां करीषिणीम् । ईश्वरी सर्वभूतानां तामिहोपह्वये श्रियम् ।। श्रीचंदनागरु कस्तूरी रोचनाभि सुसंयुतम् । गृहाण गन्धं देवेशि सर्वकामफप्रदे । चन्दनम् समर्पयामि ।

## सौभाग्यसूत्रदानम् --

ॐ सौभाग्यसूत्रं वरदे सुवर्णमणि संयुतम् । कण्ठे वघ्नर्गम देवेशि सौभाग्यं देहि मे सदा ।। सौभाग्यसूत्रं समर्पयामि ।।

## अक्षतान् --

ॐ अक्षन्नमीमदम्तकपप्रियाऽअमूकम् । कस्तोयतरवभानपो विप्रानविप्ठयाजतीमोजान्विन्द्रतेहरी । अक्षतान्निर्मलान् हृत्ताम् शुक्लमणिसमन्विषतान् । गृहाणे मान्महादेवि देहि श्रे निर्मलं धियं । साक्षतम् समर्पयामि ।

## हरिद्राचूर्णम् --

हरिद्राचूर्णम् देवि सुख सौभाग्यदायिनि । तस्मात्वां पूजयिष्यामि सुखं प्राप्नोति मेकले हरिद्राचूर्णम् समर्पयामि ।

## कुंकुमम् --

कुंकुमं कान्तिदं दिव्यं कामिनीकामसम्भवम् । कुंकुमेनार्चिते देवि प्रसीद् परमेश्वरि ।। कुंकुमं समर्पयामि ।

## सिन्दूरम् --

सिन्दूरमरुणाभासं जपाकुसुमसन्निभम् । अर्पितं ते मया देवि प्रसीद परमेश्वरि ।। सिन्दूरम् समर्पयामि ।

**कज्जलं --**

चक्षुर्भ्यां कज्जलं रम्यं सुभगे शान्तिकारकम् । कर्पूरज्योतिकत्पन्नं गृहाण परमेश्वरि ।। इति नेत्रे कज्जलं स० ।

**विल्वपत्राणि --**

ॐ आर्द्रायः करिणीं यष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्यमयी लक्ष्मी जातवेदो म आवह ।। अमृतोद्भवश्रीवृक्षो महादेवप्रियः सदा । विल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ।। इति विल्वपत्राणि स० ।

**पल्लवम् --**

ॐ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतिंगावोदास्योऽश्वान् विन्देयं पुरुषानहम् । गृहद्वारं चोग्रमपि दुष्टासुरनिवर्हिथि । पूजां करोमि चार्वङ्गि पल्लवैर्नन्दनोद्भवैः ।। इति पल्लव० स० ।

**फलमाला --**

ॐ महादेवी च विद्महे विष्णुपत्नीं च धीमहि तन्नोदेवी प्रचादयात् । शरत्काले समुद्भुता निशुम्भासुरमर्दिनी । फलमालां वरां देवि गृहाण सुरपूजिते ।। इति फलमालां स० ।

**रत्नमाला --**

ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रवानिदाशुपे ।। मुक्ताफलयुतांमालां रत्नवैदूर्यसुप्रभाम् । माणिक्य स्वर्णग्रथितां गृहाणसुरपूजिते नमः ।। इति रत्नमालां स० ।

**पुष्पमाल्यम् --**

ॐ आपः सृजन्तु स्निग्धानिविक्लीत वस मे गृहे । नि च देवी मातरं श्रियं वासय मे कुले ।। पद्मशंखजपुष्पादि शतपत्रैर्विचित्रिताम् । पुष्पमालां प्रयच्छामि गृहाणत्वं सुरेश्वरि ।। इति पुष्पमालां स० ।

**पुष्पाणि --**

ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि

श्रीः श्रयतां यशः ।। नाना पुष्पविचित्राढ्यां पुष्पमालां सुशोभनाम् । प्रयच्छामि सुपुष्पाणि गृहाणत्वं सुरेश्वरि ।। इति पुष्पाणि स० ।।

## अलङ्कारिणी --

हारकंकणकेयूरमेखलाकुण्डलादिभिः । रत्नाढ्यकुण्डलोपेतं भूषणं प्रतिगृह्यताम् ।। अलङ्कारम् म० ।

## सुगन्धितद्रव्यम् --

ॐ अहिरिव भोगैः पर्येति बाहुँज्यायाहेतिं परिबाधमानः । हस्तघ्नोविश्वाव्वयुना निविद्वान्युमात्पुमा ७ समपरिपातुविश्वतः । चन्दनागरुकर्पूर कुंकुमं रोचनं तथा । कस्तूर्यादि सुगन्धांश्च सर्वाङ्गेपु विलेषयेत् ।। इति परिमल (इत्र) द्रव्यं स० ।

## अङ्गपूजा --

ॐ दुर्गायै नमः पादौ पूजयामि नमः । ॐ महाकाल्ये नमः गुल्फो पूजयामि नमः । ॐ मंगलायै नमः जानुद्वयं पुजयामि नमः । ॐ कात्यायन्ये नमः उरुद्वयं पूजयामि नमः । ॐ भद्रकाल्यै नमः कटिंपूजयामि नमः । ॐ कमलवासिन्यै नमः नाभि पूजयामि नमः । ॐ शिवायै नमः उदरं पूजयामि नमः ॐ क्षमायै नमः हृदयं पूजयामि नमः । ॐ कौमायै नमः स्तनौ पूजयामि नमः । ॐ उमायै नमः हस्तौ पूजयामि नमः । ॐ महागौर्यै नमः दक्षिणबाहुं पूजयामि नमः । ॐ वैष्णव्यै नमः वामबाहुं पूजयामि नमः । ॐ रमाये नमः स्कन्धै पूजयामि नमः । ॐ स्कन्दमात्रे नमः कण्ठं पूजयामि नमः । ॐ महिषमर्दिन्यै नमः नेत्रे पूजयामि नमः । ॐ सिंहवाहिम्यै नमः मुखं पूजयामि नमः । ॐ माहेश्वर्यै नमः शिरः पूजयामि नमः । ॐ कात्यायन्यैः नमः सर्वाङ्गपूजयामि नमः इत्यङ्गपूजनम् ।।

## धूपमः --

ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । सूक्तं पञ्च दशर्चं व श्रोकामः सतत् जपेत् । गुग्गुलंगन्धसंयुक्तमगर्वदि समायुतम् । दशङ्गि गृह्य

धूपस्तु भद्रकालि नमोऽन्तुते ।। धूपमाघ्रापयामि नमः ।

**दीपम् --**

ॐ सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे । भगवति हरिमनोज्ञे बल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीव मध्यम् ।।

आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।

दीपं गृहाण देवेशि ! त्रैलोक्यंतिमिरापहम ।।

श्री दुर्गादिव्यै नमः, दीपं दर्शयामि ।

**नैवेद्यम् --**

आर्द्रां पुष्करिणीं यष्टिं सुवर्णां हेममालिनीम् ।

सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ।।

अन्नं चतुर्विधं स्वादुरसैः षड्भि समन्वितम् ।

नैवेद्यं गृह्यतां देवि ! भक्तिं मे ह्यचवलां कुरु ।।

भगवती-श्रीदुर्गादेव्यै नमः नैवेद्यं निवेदयामि ।

ॐ प्राणाय स्वाहा, अपानाय स्वाहा,

व्यानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा,

मध्येपानीयम् उत्तरापोषणं हस्तप्रक्षालनम् मुखप्रक्षालनम् ।

इति आचमनीयं जलं समर्पयामि ।

**ऋतुफलम् --**

ॐ याः फलिनीर्या अफला अपुष्पायाश्च पुष्पिणीः । बृहस्पति प्रसूतास्तानो मुञ्चंत्वं ँ हसः ।। नानाफलानि दिव्यानि ऋतुदेशभवानि च । पूर्णैःफलैश्च सहितान्यंवत्वामर्पयाम्यहम् । श्री दुर्गादेव्यै नमः, फलम् समर्पयामि ।

**पूगीफलताम्बूलम् --**

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।

यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ।।

एलालवङ्गकस्तूरीकर्पूरैः पुष्पवासिताम् ।

वीटिकां मुखवासार्थमर्पयामि सुरेश्वरि ।।

भगवत्यै श्रीदुर्गादेव्यै नमः मुखवासार्थे एलालवङ्गादिमिर्युतं

पूगीफलताम्बूलं समर्पयामि ।

## दक्षिणाद्रव्यम् --

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।

सूक्तं पञ्चदशर्च च श्रीकामः सततं जपेत् ।।

पूजाफलसमृद्ध्यर्थं तवाग्रे स्वर्णमीश्वरि ।

स्थापितं तेन मे प्रीता पूर्णान् कुरु मनोरथान् ।।

श्रीदुर्गादेव्यै नमः, द्रव्यदक्षिणां समर्पयामि ।

## आर्तिक्यम् --

ॐ इद ७ हविः प्रजननं मेऽअस्तु दशवीरः ७ सर्वगण ७ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्नभयसनि । अग्निः प्रजां वहुलां मे करोत्त्वन्नं पयो रेतो ऽअस्मासु धत्त । आ रात्रि पार्थिव७ रजः पितुरप्रायि धामभिः । दिवः सदा ७ सि वृहती वितिष्ठसऽआ त्त्वेपं वर्त्तते तमः ।।

## मन्त्र-पुष्पाञ्जलि --

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्तय यत्र पूर्वे साद्ध्याः सन्तिदेवाः ।

ॐ राजाधिराजाय प्रसह्य सायिने । नमोवयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यं । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ।

ॐ स्वति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यंमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुच आन्तादापरार्धात् पृथिव्यै समुद्रपर्यतायाऽएकराडिति । तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुतस्या ऽवसन् गृहे । आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ।

ॐ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो वाहुरुत विश्वतत्पात् ।
सम्वाहुभ्यां धमति सम्पतद्त्रैर्द्यावाभूमि अनयंन् देव एकः ।

सेवन्तिकावकुलचम्पकपाटलाऽब्जैः पुन्नागजातिकरवीररसालपुष्पैः ।
विस्वप्रवालतुलसीदलमञ्ज़रीभिः त्वां पूजयामि जगदीश्वरि में प्रसीद ।।

नाना सुगन्धि पुष्पाणि यथाकालोद्भवानि च ।
मया पुष्पाञ्जलिः दत्ता गृहाय परमेश्वरि ।

**प्रदक्षिणा --**

ॐ सप्तास्या सन्नपरिपयस्त्रिः सप्तसमिधः कृताः ।
देवा यद्यज्ञं तन्वाना ऽअवध्नन्पुरुपं पशुम ।।
पदे पदे या परिपूजकेभ्यः सद्योऽ श्वमेधादि फलं ददाति ।
तां सर्वपापक्षय हेतुभूतां प्रदक्षिणां तं परितः करोमि ।।
यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि सर्वाणि नश्यन्तु प्रदक्षिण पदे पदे ।।

**प्रार्थना --**

एषा भक्त्या तव विरचिता या मया देवि ! पूजा
स्वीकृत्यैनां सपदि सकलान् मेऽपराधान् क्षमस्व ।
नूनं यत्ततव करुणया पूर्णतामेतु सद्यः
सानंदं मे हृदयकमले तेऽस्तु नित्यं निवासः ।।
या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेपु वुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म पालय देवि ! विश्वम ।।
अनयापद्मजा भगवती श्रीदुर्गादेवी प्रीयताम् ।

# चतुःषष्ठिकोष्ठात्मकं वास्तुमण्डलम्

# आवरणपूजा

**प्रथमावरणम्**

वामेन तत्त्वमुद्रया तर्पणम् । दक्षिणेन ज्ञानमुद्रया पूजनम् ।

**प्रार्थना --**

संचिन्मयपरे देवि ! परामृतचरुप्रिये ॥

अनुज्ञां देहि मे मातः ! परिवारार्चनाय ते ॥

दक्षिणेना-ऽक्षत-पुष्पादिना पूजयामीति सम्पूज्य

**यथा** -- वामकरधृतार्द्रखण्डेन विशेषार्घजलैस्तर्पयाम्येवं सर्वत्र । ह्रीं ऐं ह्रीं क्लीं चामुण्डायै सायुधायै सशक्तिकायै श्रीमहाकाली-विच्चे साङ्गायै सपरिवारायै सावरणायै

महालक्ष्मी-महासरस्वत्यै नमः, श्रीमहाकाली-महालक्ष्मी-महासरस्वती-श्रीपादुकां पूजयामि तर्पयामि ।

ह्रीं ऐं ह्रीं क्ली चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधायै सशक्तिकायै श्रीमहाकाल्यै नमः श्रीमहाकाली-श्रीपादुकां पूजयामि तर्पयामि ।

ह्री ऐं ह्रीं क्लीं चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधाय सशक्तिकायै श्रीमहालक्ष्म्यै नमः, श्रीमहालक्ष्मीश्रीपादुकां पूजयामि तर्पयामि ।

ह्री ऐं ह्रीं क्लीं चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधायै सशक्तिकायै श्रीमहासरस्वत्यै नमः श्रीमहासरस्वतीश्रीपादुकां पूजयामि तर्पयामि ।

**विन्दोः परितो गुरुचतुष्टयं पूजयेत् --**

ह्रीं गुरवे नमः, गुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं परमगुरवे नमः परम गुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं परात्परगुरवे नमः, परात्परगुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं परमेष्ठिगुरवे नमः, परमेष्ठिगुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि ।

षडङ्गं पूजयेत् -- ह्रीं ऐं हृदयाय नमः, हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं शिरसे नमः, शिरःशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्ली शिखायै नमः शिखाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं चामुण्डायै कवचाय नमः, कवचशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं विच्चे नेत्रत्रयाय नमः, नेत्रशक्तिश्रीपादुकां पूजयामि तर्पयामि । मूलेन अस्त्राय नमः, अस्त्रशक्तिश्रीपादुकां पूजयामि तर्पयामि ।

प्रथमावरणदेवताभ्यो नमः, सर्वोपचारार्थे गन्धं पुष्पं समर्पयामि ।

सामान्यार्घजलमादाय -- एताः प्रथमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु ।

पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।

भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।१।।

पुष्पाञ्जलिं दत्वा । अनेन प्रथमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति प्रथमावरणम् ।

## द्वितीयावरणम् --

त्रिकोणे स्वाग्रादिप्रादक्षिण्येन पूजयेत् -- ह्रीं सावित्र्या सह विधात्रे नमः, विधातृशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं श्रिया सह विष्णवे नमः, विष्णुशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं उमया सह शिवाय नमः, शिवशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्षुं सिंहाय नमः, सिंहशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं हुं महिपाय नमः, महिपशक्तिश्रीपादुकां पूजयामि तर्पयामि ।

द्वितीयावरणदेवताभ्यो नमः, गन्धं पुष्पं च समर्पयामि ।

सामान्यार्धजलमादाय, एताः द्वितीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु ।

पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।।

भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।२।।

पुष्पाञ्जलिं दत्वा । अनेन द्वितीयावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति द्वितीयावरणम् ।

## तृतीयावरणम् --

षट्कोणेऽग्नीशासुरवायव्ये मध्ये दिक्षु च पूजयेत्-ह्रीं ऐं नन्दजायै नमः नन्दजाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं रक्तदन्तिकायै नमः । रक्तदन्तिकाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्लीं शाकम्भर्यै नमः शाकम्भरीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं दुं दुर्गायै नमः दुर्गाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं हुं भीमायै नमः । ह्रीं भीमाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं भ्रामर्यै नमः भ्रामरीशक्तिश्रीपादुकां पूजयामि तर्पयामि । तृतीयावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि । समान्यार्घजलमादाय, एतास्तृतीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु । पुष्पाञ्जलि मादाय ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ! ।

भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ।।३।।

पुष्पाञ्जलिं दत्वा ।। अनेन तृतीयावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति तृतीयावरणम् ।

## चतुर्थावरणम् :-

ततोऽष्टपत्रे स्वाग्रादिप्रादक्षिण्येन पूजयेत् --

ह्रीं ऐं ब्राह्म्यैः नमः, ब्राह्मीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं माहेश्वर्यै नमः, माहेश्वरीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्लीं कौमार्यै नमः, कौमारीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं वैष्णव्यै नमः, वैष्णवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं लृं वाराह्यै नमः, वाराहीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्ष्रौं नारसिंह्यै नमः, नारसिंहीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं लं ऐन्द्र्यै नमः, ऐन्द्रीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं स्च्यें चामुण्डायै नमः, चामुण्डाशक्तिश्रीपादुकां पूजयामि तर्पयामि ।

मध्ये -- ह्रीं लक्ष्म्यै नमः, लक्ष्मीशक्तिश्रीपादुकां पूजयामि तर्पयामि ।

चतुर्थावरणदेवताभ्यो नमः, गन्धं पुष्पं समर्पयामि ।

सामान्यार्घजलमादाय -- एताश्चतुर्थावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु ।

पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ! ।

भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ।।४।।

पुष्पाञ्जलिं दत्वा । अनेन चतुर्थावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति चतुर्थावरणम् ।

## पञ्चमावरणम्

ततश्चतुर्विंशतिदले स्वाग्रादिप्रादक्षिण्येन -- ह्रीं विं विष्णुमायायै नमः, विष्णुमायाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्री चें चेतनायै नमः, चेतनाशक्ति-

श्रीपादुकां पूजयामि तर्पयामि । ह्रीं वुं वुद्ध्यै नमः, वुद्धिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं निं निद्रायै नमः, निद्राशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्षुं क्षुधायै नमः, क्षुधाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं छां छायायै नमः, छायाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं शं शक्त्यै नमः, शक्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं तृं तृष्णायै नमः, तृष्णाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं जां जात्यै नमः जातिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं लं लज्जायै नमः लज्जाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं शां शान्त्यै नमः शान्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं श्रं श्रद्धायै नमः श्रद्धाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं कां कान्त्यै नमः कान्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं लं लक्ष्म्यै नमः लक्ष्मीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं धृं धृत्यै नमः धृतिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं वृं वृत्त्यै नमः वृतिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं श्रुं श्रुत्यै नमः श्रुतिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं स्मृं स्मृत्यै नमः स्मतिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं दं दयायै नमः दयाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं तुं तुष्ट्यै नमस्तुष्टिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं पुं पुष्ट्यै नमः पुष्टिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं मां मातृभ्यो नमः मातृशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्री भ्रां भ्रान्त्यै नमः भ्रान्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि ।

पञ्चमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि । सामान्यार्घजलमादाय, एताः पञ्चमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु । पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥

पुष्पाञ्जलिं दत्वा । अनेन पञ्चमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति पञ्चमावरणम् ।

**षष्ठावरणम् --**

भूपुरे कोणचतुष्टये आग्नेयादिकोणमारभ्य -- ह्रीं गं गणपतये नमः गणपतिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्षं क्षेत्रपालाय नमः क्षेत्रपालशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं बं बटुकाय नमः बटुकशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्री यां योगिन्यै नमः योगिनीशक्तिश्रीपादुकां पूजयामि तर्पयामि । षष्ठावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि ।

सामान्यार्वजलमादाय, एताः षष्ठावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु ।

पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं षष्ठावरणार्चनम् ।।६।।

पुष्पाञ्जलिं दत्वा । अनेन षष्ठावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति षष्ठावरणम् ।

**सप्तमावरणम् --**

पूर्वादिदशदिक्षु -- ह्रीं लं इन्द्राय नमः इन्द्रशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्री रं अग्नये नमः अग्निशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं यं यमाय नमः यमशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्षं निर्ऋतये नमः निर्ऋतिशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं वं वरुणाय नमः वरुणशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं यं वायवे नमः वायुशक्तीश्रीपादुकां पूजयामि तर्पयामि । ह्रीं सं सोमाय नमः सोमशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं हं ईशानाय नमः ईशानशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं व्रं ब्रह्मणे नमः ब्रह्मशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं अनन्ताय नमः अनन्तशक्तिश्रीपादुकां पूजयामि तर्पयामि । सप्तमावरणदेवताभ्यो नमः गन्ध पुष्पं समर्पयामि ।

सामान्यार्घजलमादाय, एताः सप्तमावरणदेवताः सांगाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु । पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ।।७।।

पुष्पाञ्जलिं दत्वा । अनेन सप्तमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति सप्तमावरणम् ।

## अष्टमावरणम् --

तदबहिः पूर्वादिपु -- ह्रीं वं वज्राय नमः वज्रशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं शं शक्त्यै नमः शक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं दं दण्डाय नमः दण्डशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं खं खड्गाय नमः खड्गशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं पां पाशाय नमः पाशशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं अं अङ्कुशाय नमः अङ्कुशशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं गं गदाय नमः गदाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं त्रिं त्रिशूलाय नमः त्रिशूलशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं पं पद्माय नमः पद्मशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं चं चक्राय नमः चक्रशक्तिश्रीपादुकां पूजयामि तर्पयामि । अष्टमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि ।

सामान्यार्घजलमादाय -- एताः अष्टमावरणदेवताः सांगाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु ।

## पुष्पाञ्जलिमादाय --

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यंमष्टमावणार्चनम् ॥

पुष्पाञ्जलिं दत्वा । अनेनाऽष्टमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इत्यष्टमावरणम् ।

## नवमावरणम् --

कलशात् पूर्वादिदिक्षु -- ह्रीं वज्रहस्तायै गजारूढायै कादम्बरीदेव्यै नमः कादम्बरीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । शक्तिहस्तायै अग्निवाहनायै उल्कादेव्यै नमः उल्कादेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । दण्डहस्तायै महिषारूढायै करालीदेव्यै नमः करालीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । खड्गहस्तायै शववाहनायै रक्ताक्षीदेव्यै नमः रक्ताक्षीदेवीशक्तिश्रीपादुकां पूजयामि

तर्पयामि । पाशहस्तायै मकरवाहनायै श्वेताक्षीदेव्यै नमः श्वेताक्षीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । अंकुशहस्तायै मृगवाहनायै हरिताक्षीदेव्यै नमः हरिताक्षीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । गदाहन्तायै सिंहारूढायै यक्षिणीदेव्यै नमः यक्षिणीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । शूलहस्तायै वृषभवाहनायै कालीदेव्यै नमः कालीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । पद्महस्तायै हंसवाहनायै सुरज्येष्ठादेव्यै नमः सुरज्येष्ठादेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । चक्रहस्तायै सर्पवाहनायै सर्पराज्ञीदेव्यै नमः सर्पराज्ञीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि ।

नवमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि । सामान्यार्घजलमादाय, एताः नवमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तुः । पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ।।

पुष्पाञ्जलिं दत्वा । अनेन नवमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

इति नवमावरणम् ।

## नवदुर्गापूजनम् --

हस्तेगन्धाक्षतपुष्पाणि गृहीत्वा --

## प्रथमं शैलपुंत्री पूजनम्

वन्दे वाञ्छितलाभाय चन्द्रार्धकृतशेखराम् ।
वृषारूढां शूलधरां शैलपुत्री यशस्विनीम् ।।
ॐ भूर्भुवः स्वः शैलपुत्रि ! इहागच्छ इहतिष्ठ ।
शैलपुत्र्यै नमः शैलपुत्रीमावाहयामि, स्थापयामि, पूजयामि ।

## ब्रह्मचारिणी पूजनम् --

दधाना करपद्माभ्यामक्षमालाकमण्डलू ।
देवी प्रसीदतु मयि ब्रह्मचारिण्यनुत्तमा ।।

ॐ भूर्भुवः स्वः ब्रह्मचारिणि ! इहागच्छ इहतिष्ठ ब्रह्मचारिण्यै नमः ब्रह्मचारिणीमावाहयामि, स्थापयामि, पूजयामि ।

17

**चन्द्रघण्टा पूजनम् --**

अण्डजप्रवरारूढा चण्डकोपार्भटीयुता ।
प्रसीद तनुतां मह्यं चन्द्रघण्टेति विश्रुता ।।

ॐ भूर्भुवः स्वः चन्द्रघण्टे इहागच्छ इहतिष्ठ चन्द्रघण्टायै नमः । चन्द्रघण्टामावाहयामि स्थापयामि पूजयामि ।

**कूष्माण्डा पूजनम् --**

सुरासम्पूर्णकलशं रुधिराप्लुतमेव च ।
दधाना हस्तपद्माभ्यां कूष्माण्डा शुभदास्तु मे ।।

ॐ भूर्भुवः स्वः कूष्माण्डे इहागच्छ इहतिष्ठ, कुष्माण्डायै नमः कूष्माण्डामावाहयामि स्थापयामि पूजयामि ।

**स्कन्दमाता पूजनम् --**

सिंहासनगता नित्यं पद्माञ्चितकरद्वया ।
शुभदास्तु सदा देवी स्कन्दमाता यशस्विनी ।।

ॐ भूर्भुवः स्वः स्कन्दमातः ! इहागच्छ इहतिष्ठ, स्कन्दमात्रे नमः स्कन्दमातरावाहयामि स्थापयामि पूजयामि ।

**कात्यायनी पूजनम् --**

चन्द्रहासोज्ज्वलकरा शार्दूलवरवाहना ।
कात्यायनी शुभं दद्याद् देवी दानवघातिनी ।।

ॐ भूर्भुवः स्वः कात्यायनि ! इहागच्छ इहतिष्ठ, कात्यायन्यै नमः । कात्यायनीमावाहयामि स्थापयामि पूजयामि ।

**कालरात्री पूजनम् --**

करालरूपा कालाब्जसमानाकृतिविग्रहा ।
कालरात्रिः शुभं दद्यात् देवी चण्डादृहासिनी ।।

ॐ भूर्भुवः स्वः कालरात्रि ! इहागच्छ इहतिष्ठ, कालरात्र्यै नमः । कालरात्रीमावाहयामि स्थापयामि पूजयामि ।

**महागौरी पूजनम् --**

श्वेतहस्तिसमारूढ़ा श्वेताम्वरधरा शुचिः ।

महागौरी शुभं दद्यान्महादेवप्रमोददा ॥

ॐ भूर्भुवः स्वः महागौरि ! इहागच्छ इहतिष्ठ, महागौर्यै नमः । महागौरीमावाहयामि स्थापयामि पूजयामि ।

**सिद्धिदा पूजनम् --**

सिद्धगन्धर्वयक्षाद्यैरसुरैरमरैरपि ।

सेव्यमाना सदा भूयात् सिद्धिदा सिद्धिदायिनी ॥

ॐ भूर्भुवः स्वः सिद्धिदे ! इहागच्छ इहतिष्ठ, सिद्धिदायै नमः । सिद्धिदामावाहयामि स्थापयामि पूजयामि ।

**अखण्डदीपपूजनम् --**

सुप्रकाशो महादीप्तः सर्वतस्तिमिरापहः ।

स-वाह्याभ्यन्तर ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा । ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ।

दीपस्थदेवताभ्यो नमः, सर्वोपचारार्थे गन्धा-ऽक्षतपुष्पाणि समर्पयामि । इति सम्पूज्य, प्रार्थयेत् ।

**दीप-प्रार्थना --**

भो दीप ! देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ।

यावत् कर्मसमाप्तिः स्यात्तावदत्र स्थिरो भव ॥

**बलिदानम् --**

'नारिकेलवलयं नमः' इत्यनेन पञ्चोपचारैः नारिकेलं सम्पूज्य, देव्याः पुरतः 'नारिकेलवलि तुभ्यं समर्पयामि' इत्युक्त्वा, नवार्णमन्त्रेण वीरासनमुद्रया एकहस्तेन एकवारमेप वलिं स्फोटयित्वा देव्यै निवेदयेत् ।

# वटुक-कुमारिका-पूजनम्

हस्ते-ऽक्षत -- पुष्पाणि गृहीत्वा,

कर-कलित-कपालः कुण्डली-दण्डपाणिस्तरूण-तिमिरनील-व्यालयज्ञोपवीती ।
क्रतुसमयसपर्या विघ्नविच्छेदहेतु र्जयति वटुकनाथः सिद्धिदः साधकानाम् ।।

इति श्लोकं पठित्वा, 'वं वटुकाय नमः' इत्यनेन वटुकम् सम्पूजयेत् ।

मन्त्राक्षरमयीं देवीं मातृणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ।।

१. कुमारी -- सर्वस्वरूपे ! सर्वेशे ! सर्वशक्ति स्वरूपिणि ।
पूजां गृहाण कौमारि ! जगन्मातर्नमोस्तु ते ।

२. त्रिमूर्ति -- त्रिपुरां त्रिपुराधारां त्रिवर्ग-ज्ञान-रूपिणीम् ।।
त्रैलोक्य वन्दितां देवीं त्रिमूर्ति पूजयाम्हयम् ।।

३. कल्याणी -- कलात्मिका कलातीतां कारुण्यहृदयां शिवाम् ।
कल्याण-जननी देवीं कल्याणीं, पूजयाम्यहम ।।

४. रोहिणी -- अणिमादि गुणाधारामकाराद्यक्षरात्मिकाम् ।
अनन्तां शक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ।।

५. कालिका -- कामचारां शुभः कान्तां कालचक्रस्वरूपिणीम् ।
कामदां करुणोदारां कालिकां पूजयाम्यहम् ।।

६. चण्डिका -- चण्डवीरां चण्डमायां चण्डमुण्डप्रभंजनीम् ।।
पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ।।

७. शाम्भवी -- सदानन्दकरीं शान्तां सर्वदेव नमस्कृताम् ।
सर्व भूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ।।

८. दुर्गा -- दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् ।
पूजयामि सदा भक्तया दुर्गाः दुर्गर्तिनाशिनीम् ।।

९. सुभद्रा -- सुन्दरी स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् ।
सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ।।

"कुमार्यै नमः" इत्यनेन कुमारीं व सम्पूज्य, तयोर्भाले तिलकं कृत्वा, मिष्टान्न दक्षिणां च दत्वा प्रणमेत् ।

# क्षेत्रपालमण्डलदेवताचक्रमिदम्

## क्षेत्रपाल-चक्र

## दुर्गोपनिषत्कल्पद्रुमसम्मतम्

### देव्या विशेषहवनविधानम्

| अ० | मन्त्राः | संख्या | वस्तुनाम |
|---|---|---|---|
| १. | वलादाकृष्यमोहाय -- | ५६ | शर्करा |
| १ | आस्तीर्य शेषमभजत -- | ६७ | कमलबीज कमलगट्टा |
| १ | वाच्वेताभ्यामिति तदा -- | १०० | कर्पूर |
| १ | विलोक्य ताभ्यां गदितो -- | १०१ | कमलगट्टा |
| १ | तथेत्युक्त्वा भगवती -- | १० | मधु-केला गुग्गुल नागर पान |

